तिथ्यः पंचदशघटिकायुक्ता ऊनाः यदास्य ध्यरेखातः प्रत्यग्योजनानि तदा युक्ताः यदा तु प्राग्योजनानि तदा हीनाः कार्याः अथ यद्दिने वारप्रवृत्तिरिष्टा तद्दिवसे यद्दिनार्द्धं चरपलयुतहीनानाडिका पंचचंद्रा इत्यादि प्रकारसिद्धम् तस्माद्दिनार्धात् संस्कारविशिष्टाः पंचदश ऊनाधिकाश्चेद्भवंति तदा तद्दिवसोद्भवैः पलैर्दिनार्धस्य संस्कारविशिष्टपंचदशानां च यद्विवरं अंतरं तत्संबंधेनास्थैरुसन्नैः पलैरूर्ध्वं तथाधो दिनयस्य वारस्य प्रवेशः यदा संस्कारविशिष्टाः पंचदश दिनार्धतश्चेदूनास्तदा सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा संस्कारविशिष्टाः पंचदश दिनार्धतोऽप्यधिकास्तदा सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः यथा वाराणसी रेखाभिधानात् कुरुक्षेत्राद्वा क त्रिषष्टि योजनानि ६३ पादोनचतुर्योजनोनानि ४७।१५ प्राग्योजनत्वादेतैः पलैरूनाः पंचदशघटिका जाताः १४।१३ दिनार्द्धं १६।३० अस्मान्न्यूनादिति विवरं २।१७ तेनाभिर्घटीभिः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा दिनार्द्धं १३।५० अस्मादधिकादिति विवरं ०।२३ एताभिर्घटीभिः सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः ५४ अथ वारप्र-

**ऊनाधिकास्तद्दिवसोद्भवैः पलैरूर्ध्वन्तथाधो दिनपप्रवेशनम् ५४ वारादेर्घटिका द्विघ्नाः स्वाश्वाप्तच्छेषवर्जिताः सैकास्तष्ट नगैः कालहोरेशा दिनपात्क्रमात् ५५ ॥**

॥ वृत्तिप्रयोजनपरः सन् कालहोरामनुष्टुभाह वारादेरिति वारप्रवृत्तिप्रकारेण यस्मिन् क्षणे वारप्रवृत्तिर्जाता ततः इष्टघट्यो द्विगुणाः कार्याः तद्द्विस्थाने स्थाप्याः तत्र पंचभिर्भक्ते यल्लब्धं तेनाज्यच्छेषं तद्द्विगुणघटीमध्ये वर्जितं कार्यं एवंविधा घट्यः सैकाः एकयुक्ताः कार्याः सप्तभिस्तष्टा अवशिष्टाः कालहोरेशाः स्युः ते दिनपात् वारात् क्रमात् गणनीयाः यथा रविवारे इष्टघटिकाः ६। द्विगुणाः १२ शरगाप्ता ५ लब्धेः २ वर्जिताः १० सैकाः ११ नगैः ७ तष्टाः शेषं ४ रविवारे क्रमाद्गणनया चतुर्थो बुधस्तस्य होरा इत्यादि विवाहवृन्दावने उदयमारभ्य होरा उक्ताः यथा तत्कालार्कनूनलग्नांशपिंडो भक्तः पंचखाग्निभिर्भुक्तहोराः भास्वच्छुक्रज्ञेन्दुसौरेज्यभौमाः संख्यायेरन्वारतस्तेतदीशा इति अनयोर्विषयविभागो वसिष्ठसंहितायां वारप्रवृत्तिविज्ञानं क्षणवारार्थमेव हि अखिलेष्वन्यकार्येषु दिनादिरुदयाद्भवेत् क्षणवारः कालहोरारूपस्तदर्थं वारप्रवृत्तिः अन्यकार्येषु दीक्षा तिथिवारप्रयुक्तेषु वा योगेषु च सूर्योदयादेव वारो ग्राह्यः ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ छ ॥ ॥

अथ कालहोराप्रयोजनं शालिन्याह वारेप्रोक्तमिति यत्कर्म यस्मिन्वारे प्रोक्तं तद्दिनस्य सदोषत्वात् तस्यावश्यकत्वे तस्य कालहोरायां कर्त्तव्यम् नारदः यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते ग्रहस्य क्षणवारेपि तस्य तत्कर्म सर्वदा अत्र केचित् यस्य वारे कर्म प्रोक्तं तस्य बलिनोनवांशे सूर्यश्चंद्रो वा चेत्तिष्ठति तत्र तत्कर्म कार्यमित्याहुः उक्तंच यस्य ग्रहे दिने कर्म यत्किंचिदभिधीयते यस्यांशस्थिते चंद्रे सूर्ये वा तद्विधीयते इति अथ धिष्ण्ये नक्षत्रे यत्कर्म वस्त्रप रिधानादिकमुक्तं तदस्यावश्यकत्वे अस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिनो मुहूर्ते कुर्यात् नारदः यस्मिन्नृक्षे तु यत्कर्म निखिलं कथितं च यत् तद्दे वत्ये तन्मुहूर्ते कार्यं यात्रादिकं तथेति मुहूर्तस्वामिनो विवाहप्रकरणे वक्ष्यन्ते क्षणेषु मुहूर्तेषु दिक्शूलादि दिक्शूलं वारशूलं नक्षत्रशूलं चिंत्यं विचारणीयं एवं पारिघो दंडः क्षणेषु मुहूर्तेषु नैवोल्लंघ्यः दिक्शूलादिकमखिलं पारिघदण्डादि विज्ञेयमिति वसिष्ठोक्तेः ५६ अथ मन्वादीन्युगादींश्च शार्दूलविक्रीडितेन

वारे प्रोक्तं कालहोरासु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशके ऽस्य कुर्याद्दिक्शूलादि चिंत्यं क्षणेषु नैवोल्लंघ्यः पारिघश्चापि दंडः ५६।
मन्वाद्याः स्युस्तिथिमधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी ज्येष्ठेंत्ये च तिथिः स्विषे नवतपस्यश्वाः सहस्ये शिवाः भाद्रेग्निश्च सितेत्वमाष्ट
नभसः कृष्णे युगाद्याः सिते गोग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ५७॥

मन्वाद्याः इति सिते शुक्लपक्षे एता मन्वादयः मधौ चैत्रे त्रितिथी तृतीया पौर्णिमे ऊर्जे कार्त्तिके तिथिरवी पूर्णिमा द्वादश्यौ शुचौ आषाढे दिक्तिथी दशमी पूर्णिमे ज्येष्ठे अंत्ये फाल्गुने च तिथिः उभयत्र पूर्णिमैव इषे आश्वि नेनवमी तपसि माघे अश्वाः सप्तमी सहस्ये पौषे शिवाः एकादशी भाद्रपदे अग्निस्तृतीया तु इति पुनः नभसः श्रावणस्य कृष्णपक्षे अमावास्या अष्टमी अथ युगाद्याः चत्वारः बाहुलराधयोः बाहुलः कार्त्तिकः राधो वैशाखः तयोः शुक्लपक्षे गोग्नी नवमी तृतीये युगादि कार्तिकशुक्लनवमी कृतयुगादिः वैशाखशुक्लतृतीया त्रेतादिः भाद्रमाघासिते मदनदर्शौ युगादि मदनस्त्रयोदशी दर्शौ अमावास्या भाद्रकृष्णत्रयोदशी कलियुगादिः माघकृष्ण अमावास्या द्वापरादिः अत्र शुक्लादयो मासा ग्राह्याः का र्त्तिके शुक्लनवमी चादिः कृतयुगस्य सा त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंमिता कृष्णा पंचदशी माघे द्वापरादिरुदीरिता कल्यादिः स्यात्कृष्णपक्षे नभस्येव त्रयोदशीति ना

अथनक्षत्रप्रकरणंव्याख्यायते तत्रादौनक्षत्रस्वामिनःशार्दूलविक्रीडितेनाह नासत्येति एतेनासत्यांतकादयः क्रमेशानक्षत्रेशाः क्रमात्स्युः १ अथध्रुवनक्ष
त्राणितत्कृत्यंचानुष्टुभाह उत्तरात्रयेति उत्तरात्रयंरोहिणीचएतानिनक्षत्राणिरविवारश्चध्रुवसंज्ञानिस्थिरसंज्ञानिचेतिसंज्ञाद्वयं एवमुत्तरत्रापिव्याख्येयम् ॥
ध्रुवनक्षत्रेषुस्थिरादिकर्मकार्यं आदिग्रहणान्मृदुनक्षत्रोक्तंग्राह्यं वसिष्ठः मृदुघ्रन्देकथितान्यपिस्थिरबन्देतानिकार्याणिइति २ अथचरभानितत्कृत्यं
चानुष्टुभाह स्वात्यादित्येति आदिशब्दाल्लघुनक्षत्रोक्तमपि ३ अथोग्रनक्षत्राणिचानुष्टुभाह पूर्वात्रयमिति आदिशब्दाद्दारुणनक्षत्रोक्तमपि ४ अथमि

नासत्यांतकवन्हिधातृशशभृद्रुद्रादितीज्योरगाक्रमेशाःपितरोभगोर्यमरवीत्वष्टाथ मीरः क्रमात् शक्राग्नीखलुमित्रइंद्रनिर्ऋ
तिक्षीराणिविश्वेविधिर्गोविन्दोवसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः १ उत्तरात्रयरोहिण्योभास्करश्चध्रुवंस्थिरम् तत्रस्थिरं
बीजगेहशांत्यारामादिसिद्धये २ स्वात्यादित्येश्रुतेस्त्रीणिचंद्रश्चापिचरंचलं तस्मिन्गजादिकारोहोवाटिकागमनादिकम्
पूर्वात्रयंयाम्यमघेउग्रंक्रूरंकुजस्तथा तस्मिन्घाताग्निशाठ्यानिविषशस्त्रादिसिध्यति ४ विशाखाग्नेयभेसौम्योमिश्रं
साधारणंस्मृतं तत्राग्निकार्यंमिश्रंचवृषोत्सर्गादिसिद्धये ५ हस्ताश्विपुष्याभिजितःक्षिप्रंलघुगुरुस्तथा तस्मिन्पण्य
रतिज्ञानभूषाशिल्पकलादिकम् ६ मृगांत्यचित्रामित्रर्क्षंमृदुमैत्रंभृगुस्तथा तत्रगीताम्बरक्रीडामित्रकार्यविभूषणम्
७ मूलेंद्रार्द्राहिभेसौरीतीक्ष्णंदारुणसंज्ञकं तत्राभिचारघातोग्रभेदाःपशुदमादिकम् ८ ॥ ८ ॥ ८ ॥ रामः

श्राण्यनुष्टुभाह विशाखेति आदिग्रहणादुग्रोक्तमपि ५ अथलघुनक्षत्राण्यनुष्टुभाह हस्तेति शिल्पंवर्द्धकिविकृत्यादि कलानृत्यादिकाश्च
तुःषष्टिः आदिशब्दाच्चरोक्तमपि ६ अथमृदुनक्षत्राण्यनुष्टुभाह मृगांत्येति ७ अथतीक्ष्णभान्यनुष्टुभाह मूलेति अभिचारःकर्मणाम्
भयंकरकृत्यमारणादि पशुदमःपशुशिक्षा आदिशब्दात् बंधनादिकंस्थिरंच ८ ॥ ८ ॥ ७ ॥ ९ ॥ श्रीकृष्ण

अधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राण्यपिइहचत्वाह मूलाहीति मूलं अहिभाश्लेषा मिश्रंकृत्तिकाविशाखे उग्रंपूर्वात्रयमघाभरण्यः एतानिनव
भानिअधोमुखानिज्ञेयानि आर्द्रापुष्यःश्रवणत्रयंरोहिण्युत्तरात्रयंचनवभान्यूर्ध्वमुखानि मैत्राणिचित्रारेवत्यनुराधाः हस्तस्वातीपुनर्वसुज्येष्ठाअश्वि
नीएतानिनवभानितिर्यङ्मुखानि एषुअधोमुखोर्ध्वमुखतिर्यङ्मुखेषुभेषुइदंशकृत्यं अधोमुखोर्ध्वमुखतिर्यङ्मुखकृत्यंसद्भवति गरुडपुराणे भरणीकृत्ति
काश्लेषामघामूलविशाखिकाः तिस्रः पूर्वास्तथाचैवअधोवक्त्राः प्रकीर्तिताः एषुवापीतडागादिकूपभूमितृणानिच देवागारस्यखननंनिधानंखननंत
था गणितंज्योतिषारंभंखनीबिलप्रवेशनं कुर्यादधोगतान्येवकार्याणिवृषभध्वज रोहिण्यार्द्रातथापुष्योधनिष्ठाचोत्तरात्रयम् वारुणश्रवणंचैवनवचो
र्ध्वमुखास्तथा एषुराज्याभिषेकंचपट्टबन्धंचकारयेत् ऊर्ध्वमुखान्युच्छ्रितानिसर्वाण्येषुचकारयेत् रेवतीचाश्विनीचित्रास्वातीहस्तःपुनर्वसुः अनुराधा

मूलाहिमिश्रोग्रमधोमुखंभवेदूर्ध्वास्यमार्द्रेज्यहरित्रयध्रुवम् तिर्यङ्मुखंमैत्रकरानिलादितिज्येष्ठाश्विभानी।
इदंकृत्यमेषुसत् १९ पौष्णध्रुवाश्विकरपंचकवासवेज्यादित्येप्रवालरदशंखसुवर्णवस्त्रम्॥ छ ॥ ७॥

मृगोज्येष्ठाएतास्तिर्यङ्मुखाःस्मृताः गजोष्ट्राश्वबलीवर्ददमनंमाहिषस्यच बीजानांवपनंकुर्याद्गमनागमनादिकम् चक्रयन्त्ररथारीनांनावादीनांप्रवाह
णं पार्श्वेषुयानिकार्याणिकुर्यादिषुचतान्यपि इदंचनक्षत्रविशेषविहितानांकर्मणामावश्यकर्तव्यत्वेमुहूर्त्तालब्धौमस्ताकर्मणः अधोमु
खाद्याकारज्ञात्वातत्तन्नक्षत्रेषुतानिकर्माणिकार्याणियानिचसर्वथानोक्तानिबिलप्रवेशादीनितान्येष्वेवनक्षत्रेषुकार्याणीत्येतदर्थमुक्तम् १
अथप्रवालादिधारणमुहूर्त्तंवसंततिलकेनाह पौष्णध्रुवेति रेवत्यादिनक्षत्रेषुतथारिक्तातिथिशनिचन्द्रभौमवर्जितेऽन्हिदिवसेप्रवाले
विद्रुमंशंखः शंखवलयादिवस्त्रंश्वेतं एतानिधार्याणि रक्तंमंजिष्ठादिरंगेनरंजितंवस्त्रंभौमवारेपिधार्यम् अथसुभगासभर्त्तृकाध्रुवादिति
युगेरोहिण्युत्तरात्रयेषु अदिति युगेपुनर्वसौपुष्येचप्रवालादिकंनदध्यात् कचिच्छ्रुतन्तारायांस्नानमपिनिषिद्धम्॥ छ ॥ २ ॥

उक्तंच रोहिणी गुरु पुनर्वसूत्तरेया बिभर्ति नववस्त्रविभूषणम् सानयोषिद्वल्लभते पतिं स्नानमाचरतिवारुणेष्वयादिति १० अथनवधाविभक्त
स्य वस्त्रस्य रंध्रादिदोषे शुभाशुभफलं शार्दूलविक्रीडितेनाह वस्त्राणामिति वस्त्राणां नवभागाः कार्याः कोणचतुष्टये अमरा देवाः स्थाः
प्याः राक्षसा मध्यगतांशगता ज्ञेयाः नराः दशांसादितेपाशे च पुनर्मध्ययोरंशयोर्ज्ञेयाः तत्र चैव रक्षांशे नवतरे नूतने वस्त्रे दैवाद्गंधे अग्निस्पृष्टे स्फु
टिते पाषाणाद्याघातादिभिर्निहते पंकेन कर्दमेन आदिशब्दात् गोमयादिभिरुपहते सति तद्वस्त्रं न सत् शुभफलजनकं न भवतीत्यर्थः नृरक्षां
शयोरेवं वस्त्ररंध्रादिके सति शुभं कल्याणं स्यात् अथ सर्वांशके राक्षसमनुष्यदेवांशकेषु प्रांततः प्रांतभागे असदनिष्टफलगमकं इदं स
वं शय्यापादुकास्वपि ज्ञेयम् श्रीपतिः कज्जलकर्दमगोमयलिप्ते वाससि दग्धवते स्फुटिते च चिंत्यमिति दं नवधा विहिते स्मिन्निष्टमनिष्ट

फं धार्यं विरिक्तशनिचंद्रकुजेन्हि रक्तं भौमे ध्रुवादितियुगे शुभमन्यनद्ध्यात् १० वस्त्राणां नवभागकेषु च चतुःकोणे मरा राक्ष
सा मध्यत्र्यंशगता नरास्तु सदृशे पाशे च मध्यांशयोः दग्धे वा स्फुटिते वरे नवतरे पंकादिलिप्ते न सद्रक्षांशे नृरक्षांशयोः
शुभमसत्सर्वांशके प्रान्ततः ११ विप्राज्ञया तथोद्वाहे राज्ञा प्रीत्यार्पितं च यत्॥ ॥ ॥ रामचंद्र

लं च सुधीभिः अत्र राक्षसांशे ध्वजछत्रादिसदृशी छेदाकृति शुभफला ज्ञेया देवमनुष्यांशेपि काकोलूकसदृशी छेदाकृतिरशुभफलदा कश्य
पः शंखचक्रांबुजछत्रध्वजतोरणसन्निभा श्रीवत्ससर्वतोभद्रनंद्यावर्त्तगृहोपमा वर्धमानस्वस्तिकेभमृगकूर्मझषाकृतिः छेदाकृतिर्दै
त्यभागेप्यायुरर्थप्रदा नृणाम् खरोष्ट्रोलूककाकादिजंबूकश्ववृकोपमा त्रिकोणः सूर्याकृतयो दैवभागेप्यशोभनाः निंदितं वसनं द्वाभ्यां द्वि
जेभ्यः स्वर्णसंयुतं आशिषो वचनं कृत्वा तन्यद्वस्त्रं च धारयेदिति १२ अत्र क्वचिदुष्टदिनेपि वस्त्रपरिधानमनुष्टुभाह विप्राज्ञयेति धि
ष्ण्ये नक्षत्रे वारादौ वार तिथ्योगादौ व्यतीपातभद्रादिदुष्टयोगे निन्द्येपि॥ ॥

यद्दुस्त्रंब्राह्मणानुज्ञयातथोहाहेराज्ञासंतोषेणार्पितंदत्तंतद्वस्त्रंधार्यमितिबुधाजगुः १२ अथलतापादपारोपणराजदर्शनमद्यगोविक्रयमु-
हूर्त्तान्शार्दूलविक्रीडितेनाह राधामूलेति राधाविशाखाएतदादिचतुर्दशनक्षत्रैर्लतानांवल्लीनांपादपानांवृक्षाणांचारोपोवापनंकार्यः।
अथराजदर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः त्रयोदशभैःकार्यं अथमद्यमद्यारंभः तीक्ष्णोग्राब्जुपभेषुनवनक्षत्रेषुउदितःकथितः अथगवांक्र-
योमूल्येनपरस्माद्ग्रहणम् विक्रयोमूल्यग्रहणपूर्वकंदानं क्षिप्रांत्यवन्हीदुभादित्येंद्राबुपवासवेषुहिनवनक्षत्रेषुशस्तःप्रशस्तः अत्रभीमप-
राक्रमेणपंचदशभान्यभिहितानि हस्तेनुराधात्रितयेसपौष्णेमृमेचपूर्वाश्विविशाखभेषु पुष्येधनिष्ठाद्वितयेदितीशेगवांक्रयंविक्रयमामनंति।

निंद्येपिधिष्ण्येवारादौवस्त्रंधार्यंजगुर्बुधाः १२ राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपारोपो
योनृपदर्शनंध्रुवमृदुक्षिप्रश्रवोवासवैः तीक्ष्णोग्राब्जुपभेषुमद्यमुदितंक्षिप्रांत्यवन्हीदुभादित्येंद्रा-
बुपवासवेषुहिगवांशस्तःक्रयोविक्रयः १३ लग्नेशुभेचाष्टमशुद्धिसंयुतेरक्षाप्रश्लानिजयोनि-
भेचरे रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वष्ट्रेषुयानेस्थितिवेशनंनसत् १४ ॥ १४ ॥ ॥

ति १३ अथपशूनांरक्षामुहूर्त्तेस्थितिनिवेशनिषेधमुहूर्त्तंचेंद्रवज्रयाह लग्नेशुभइति शुभेशुभस्वामिकेलग्नेअष्टमशुद्धिसंयुतेशु-
भपापाक्रांताष्टमभावरहितेसतिपशूनांरक्षारक्षणप्रवेशादिकंचसत् तथास्वीययोनिनक्षत्रेचरभेचसत् यथाऽश्वानांयोनिभंअश्वि-
नीशततारके तत्रचतुष्पदानांरक्षाशस्ता तीक्ष्णेपशूनांदमनंवरंस्यात्सशुपोषणमितिवचनात् अथरिक्ता ४।९।१४ ष्टमीदर्शोमावास्याः
कुजोभौमः श्रवःश्रवणम् ध्रुवाण्युत्तरात्रयरोहिण्यः त्वाष्ट्रंचित्राएषुपशूनांयानंगृहाद्बहिर्निःसारणंस्थितिर्गोष्ठादिवेशनंनसत् शुभंनव्यव-
हारोत्रये पूर्वात्रयेधनिष्ठेंद्रयोर्ज्येष्ठासौम्यविशाखयोः आश्लेषायामयाश्विन्यांयात्रासिद्धिश्चतुष्पदामिति १४ ॥ १४ ॥

अथौषधसूच्योर्मुहूर्त्तमंदाक्रांतमाह भैषज्यंसदिति भैषज्यंऔषधंप्राश्यंभक्षितंचसत् लघुमृदुचरनक्षत्रेमूलेचद्व्यंगलग्नेद्विस्व-
भावराशिषुमिथुनकन्याधनुर्मीनेषुलग्नगतेषुसत्सुशुक्रेंदुजीवबुधेषुद्विस्वभावलग्नस्थेषुसत्सुपुनस्तेषांशुक्रेंदुजीवबुधानांवारेषुदिवसे
वारेसतितिथौरिक्तामारहिततिथौभेषज्यंसत् शुभंस्यात् दीपिकायां द्व्यगोदयेगुरुबुधेंदुसितेषुसत्स्तेषांवारेश्वसुविधौसुतिथौसुयोगेभैषज्यमुप
त्नगविशाखशिवेतरेषुजन्मर्क्षविष्टिरहितेषुकृतःशुभायइति अथरिःफद्युनमृतिमृहेलग्नात् द्वादशसप्ताष्टमगृहेषुशुद्धेषुशुभपापग्रहरहितेषु
सत्सु औषधंतुवर्षफलप्रश्नादिना आयुर्निश्चयेचसत् द्यूनशत्रुनिधनव्ययशुद्धौसद्गृहेषुनितरांबलवत्सु आयुषश्चहितकारिणियोगकीर्तितानियत
मौषधसेवनेतिश्रीपतिभट्टोक्तेः अथजनेर्भेजन्मनक्षत्रेनोभैषज्यंसत् जन्मनक्षत्रगश्चन्द्रःप्रशस्तःसर्वकर्मसु क्षौरभेषजवादाध्वकेतनेषुविवर्जयेदिति

भैषज्यंसल्लघुमृदुचरेमूलभेद्व्यंगलग्नेशुक्रेंदुज्येविदिचदिवसेचापितेषांरवेश्च शुद्धेरिःफद्युनमृतिगृहेसतिथौनोजने।
भेसूचीकर्माप्यदितिवसुभेत्वाष्ट्रमित्राश्विपुष्ये १५ क्रयर्क्षेविक्रयोनेष्टोविक्रयर्क्षेक्रयोपिन पौष्णांबुपाश्विनीवातःश्रवश्चि
।।त्राक्रयेशुभाः १६

वचनात् अथसूचीकर्मसूच्याःसंबंधिकर्मघटनसीवनादितिवसुभत्वाष्ट्रमित्राश्विपुष्यनक्षत्रेसत्स्यात् व्यवहारोच्चये अदिति
र्वासवंत्वाष्ट्रमैत्रभेदववाजिनः सूचीकर्मतनुत्राणमेभिर्क्षैःप्रशस्यतइति १५ अथान्यदनुष्टुभाह क्रयर्क्षइति क्रयर्क्षेवक्ष्यमाणक्रयनक्षत्रेविक्रयो
नकार्यः तथाविक्रयनक्षत्रेक्रयोपिनकार्याः दीपिकायांयमाहिशक्राग्निविशाखपूर्वानिष्टाःक्रयेविक्रयणेतिशस्ताःपौष्णाश्विचित्राशतविष्णुवा
ताःशस्ताःक्रयेविक्रयणेनिषिद्धाइति ननुयदायेनक्रयःकर्तव्यस्तदाअन्येनविक्रयःकर्तव्यस्तत्रक्रयविक्रयनक्षत्राणामहाभेदाद्भयविधमुहू
र्त्तानुपपत्तिः उच्यते विक्रेतायदामुहूर्त्तेविक्रयार्थंगृह्यतेतदावस्तुपृथक् क्रियतेतत्कर्मविक्रयशब्दवाच्यम् यदाक्रयिणाक्रयार्थंमुहूर्त्तेःप्राप्यतेतदा
विक्रयेत्रेमूल्यद्रव्यंदत्वापृथक्कृतविक्रेतृवस्तुग्राह्यतेक्रयशब्दवाच्यमितिमत्वायथाकथंचित्समाधेयं तन्नक्रयमुहूर्त्तःरेवतीशततारा अश्विनीस्वाती

अथ विक्रयविपण्योर्मुहूर्त्तं शार्दूलविक्रीडितेनाह पूर्वाद्वीशेति द्वीशं विशाखा पूर्वादिनक्षत्रेषु केंद्रेषु प्रथमचतुर्थसप्तमदशमेषु द्वितीयकोणे नवपंचमेषु शुभैः
सद्भिः षट्त्र्यायेषु पापग्रहैः सद्भिः घटतनुं कुंभलग्नं विना त्यक्त्वा सतिथौ रिक्तामारहिततिथौ विक्रयः सन् शुभो ज्ञेयः अथ विपणिः पण्यवीथिका गृहे स्थि-
त्वा क्रयविक्रयार्थं यत्कर्म रिक्तातिथिभौमवारकुंभलग्नानि वर्जयित्वान्येषु तिथिवारलग्नेषु मित्राणि मृगरेवतीचित्रानुराधाः ध्रुवाणि रोहिण्युत्तरात्रयं क्षिप्रा-
णि हस्ताश्विपुष्याः एतैर्भैः लग्ने चंद्रे स्थिते मूर्त्तौ चंद्रे सिते च सति व्ययाष्टरहितैः पापग्रहैः सद्भिः शुभैर्द्व्यायखे वा द्वितीयैकादशमेषु सद्भिर्विपणिः शुभा स्यात्
१७ अथाश्वगजमुहूर्त्तमिंद्रवज्रयाह क्षिप्रान्त्येति क्षिप्रादिनक्षत्रेषु रिक्ताभौमव्यतिरिक्तदिने वाजिकृत्यमश्वानां क्रयविक्रयं शिक्षास्थानाभरण-

**पूर्वाद्वीशकृशानुसार्पयमभे केंद्रद्विकोणे शुभैः षट्त्र्यायेष्वशुभैर्विना घटतनुं सन्विक्रयः सत्तिथौ रिक्ताभौमघटान्विना च
विपणिर्मित्रध्रुवक्षिप्रभैर्लग्ने चंद्रसिते व्ययाष्टरहितैः पापैः शुभैर्द्व्यायखे १७ क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्व रि-
क्तारदिने प्रशस्तः स्याद्वाजिकृत्यं त्वथ हस्तिकृत्यं कुर्यान्मृदुक्षिप्रचरेषु विद्वान् १८ स्याद्रूपाघटनं त्रिपुष्करचरक्षिप्र-
ध्रुवे रत्नयुक् तत्तीक्ष्णोग्रविहीनभे रविकुजे मेषालिसिंहे तनौ ॥**

दिकार्यं प्रशस्तं स्यात् श्रीपतिः पुष्यश्रविष्ठाश्विनसौम्यभेषु पौष्णान-
लादित्यकराह्वयेषु सवारुणर्क्षेषु बुधैः स्मृतानि सर्वाणि कार्याणि तुरंगमाणां अश्वारोहणचक्रं अश्वाकारं लिखेच्च कंसाभिजिद्भानि विन्यसेत् स्कंधे द्वे
सूर्यभात्संन्यसेत् पृष्ठे च दश भानि च पुच्छे द्वे स्थापयेत् पादेष्वश्वतुष्पादेष्वतुष्टयम् उदरे विन्यसेत्सं च मुखे द्वे तुरगस्य च अर्थलाभो मुखे सम्यक् वाजिनश्चार्ति
चोदरे चरणस्थे रणे भंगः पुच्छे पत्नी विनश्यति अर्थसिद्धिर्भवेत्पृष्ठे स्कंधे स्कंधपतिर्भवेत् इति अथ विद्वान् ज्ञाता मृदुक्षिप्रचरनक्षत्रेषु रिक्तामाभौम
वर्जितदिने च हस्तिकार्यं गजानां कार्यं क्रयविक्रयभूषादि कुर्यात् वसिष्ठः हस्तत्रये सौम्यहरित्रये च पौष्णद्वये पुष्यपुनर्वसौ च मैत्रे सर्वाण्यपि कुंजरा-
णां कर्माणि शस्तान्यखिलानि यानीति १८ अथ भूषणघटनमुहूर्त्तं शार्दूलविक्रीडितेनाह स्यादिति [illegible]

वस्पति एवंविधे त्रिपुष्करदिनं चरक्षिप्रध्रुवनक्षत्रेषु भूषाघटनमाभरणघटनं शुभं स्यात् वसिष्ठः क्षिप्राचरचरकसे रिक्तामावर्जितेषु हि
वसेषु निखिलेष्वपि वारेष्वपि त्रिपुष्करे भूषणकार्ये अथ तद्भूषणं रत्नयुतं माणिक्यादियुतं चेत्तदा तीक्ष्णोग्रविहीनभे तीक्ष्णा निमूलज्येष्ठा आर्द्रा
श्लेषाख्यानि उग्राणि पूर्वात्रयमघाभरण्यः एतद्व्यतिरिक्तेष्वष्टादशनक्षत्रेषु तथा रविभौमवारेऽपि कार्यं तथा मेषवृश्चिकसिंहलग्नेषु च वसिष्ठः स्थि
रसाभरणं चरमे लघुमैत्रेष्वर्ककुजवारे तेषामेव विलग्ने माणिक्यमयभूषणं कार्यमिति कर्कवृषतुलालग्नेषु कार्यमित्यपि ज्ञेयम् वसि
ष्ठः क्षिप्रमृदुध्रुवचरभेश शिसितयार्वासरेषु तल्लग्ने मुक्ताफलरजतमयभूषणमखिलं सवज्रकं कार्यम् अथ तीक्ष्णा निमूलज्येष्ठार्द्राश्ले
षाः उग्राणि पूर्वात्रयभरणीमघा अश्विनीमृगौ द्विदैवं विशाखा दहनः कृत्तिका एषु नक्षत्रेषु घटितं शस्त्रं शुभं स्यात् अदितिर्वासवत्वष्टा मैत्रमैत्र

तस्युक्तासहितं चरध्रुवमृदुक्षिप्रेषु भेषु सत्तनौ तीक्ष्णोग्राश्विमृगे द्विदैवदहने शस्त्रं शुभं घटितं १७ मुद्राणां पातनं सद्ध्रु
वमृदुचरभक्षिप्रभे वीन्दुसौरे घस्रे पूर्णा जयाख्ये न च शुक्र भृगुजास्ते विलग्ने शुभे स्यात् ॥ ● ॥ श्रीः ॥

वषाजिनः स्त्रीकर्मननुत्राणमेभिर्ऋक्षैः प्रशस्यत इति क्रमेणोक्ते: अथ सुवर्णरूप्यादिपात्रे भोजनमुहूर्तमाह वसिष्ठः लघुमैत्रध्रुवचरभेषि
तेंदुबुधजीववारेषु हेमरजतादिभाजनभोजनमारोग्यामृतयोमिष्टमिति १९ अथ मुद्रापातनमुहूर्तं वस्त्रक्षालनमुहूर्तं च लग्नधराह मुद्राणामिति
ध्रुवमृदुचरक्षिप्रसंज्ञकैर्नक्षत्रैः कथाराजमुद्रा किंतु सुवर्णरूप्यादिनिष्पादनं मुद्रापातनमित्युच्यते टंकसालेति भाषया वीन्दुसौरे घस्रे चन्द्रशनिभ्या
रविवर्जितवारे तथा पूर्णा जयाख्ये पूर्णाः पंचमीदशमीपूर्णिमाः जयास्तृतीयाष्टमीत्रयोदश्यः एतासु तिथिष्वित्यर्थः शुभं स्यात् तथा गुरुशुक्रास्ते न शुक्र
भे विलग्ने शुभैः लग्ने शुभग्रहैः सद्भिरित्यर्थः उक्तं च मृदुध्रुवक्षिप्रचरेषु भेषु योगप्रशस्ते शशिमन्दवर्ज्यवारे तिथौ पूर्णजयाख्यये च मुद्राप्रतिष्ठा शुक्र
मदानरणां गुर्वस्ते वा सितास्ते वा मुद्राणां घटनं क्वचित् क्रूरग्रहदृशा लग्नेन कार्यं भूतिमिच्छता अथ ध्रुवे वस्त्रधनिष्ठा ॥ ● ॥ २ ॥

हयोश्विनी दिनकृत्हस्तः तस्मात्संचके हस्त चित्रा स्वाती विशाखानुराधास्तु आदित्यं पुनर्वसुः पुष्ये वस्त्राणां क्षालनं रजकाधानार्थं दे
नसत्शुभं स्यात् रिक्ता एवर्णि पूर्वोक्तानि तिथिप्रकरणे षष्ठी पितृदिने श्राद्धदिन एतेषु रविजत्रेषु शनि बुध वारेषु कदापि वस्त्रक्षालनं
नो कार्यं २० अथ खड्गादि धारणं शय्याद्युपभोगमुहूर्त्तं वसंततिलकयाह संधार्य इति विरिक्ते रिक्तावर्जितशुक्रस्य हस्तांतरि विवारे तथा मैत्र ध्रुव
लघुसंज्ञकनक्षत्रसहितपुनर्वसु ज्येष्ठा विशाखानक्षत्रेषु कुंतादयः संधार्याः कुंतो भल्लः व र्मकवचं इषवो बाणा आस्यते अनेनेतीष्वसनं ध
नुः ग्रवबाणः कृपाणः खड्गः असिपुत्री छुरिका संनाहोपीति केचित् तथा स्थिराख्य वृष सिंह वृश्चिक कुंभाख्ये लग्ने चंद्रे अपि शब्दात् लग्नेपि

वस्त्राणां क्षालनं सह स्तु हयदिनकृत्संचका दित्यपुष्येनो रिक्तापर्वषष्ठी पितृदिनरविजत्रेषु कार्यं क
दापि २० संधार्याः कुंत वर्मेषु सनशरकृपाणा सिपुत्र्यो विरिक्ते शुक्रे ज्यार्के हि मैत्र ध्रुव लघुस
हितादित्यशाक्रद्विदेवे स्युर्लग्ने हि स्थिराख्ये शशिनि च शुभदृष्टे क्रूर भैः केंद्रगैः स्याद्भोगः शय्यासना
देर्ध्रुवमृदुलघुहर्यंतकादित्यइज्ये २१ ॥. २१ ॥

अशुभग्रह दृष्टे क्रूर भैः केंद्रगैः सद्भिः कुंतादि धारणं हितं क्रूरसोच्चये पु
ण्येवादिति चित्रपद्मनननये शक्रो त्तरा रेवती वाजी हस्त विशाखमित्र सहितं भानो गुरो भार्गवे कुंभे कीटमृहे वृषे मृगपतौ चंद्रे शुभैर्वीक्षिते संनाहं
शरखड्ग कुंत छुरिका धार्यान्यपाणां हितेति यत्तु दीपिकायां मूलेंदुपूर्वात्रय याम्य पित्र्य शाक्राश्विसर्पानलसंज्ञलिनश्च शस्त्रादि संधारणमेषु कुर्यात्ति
थौ विलग्ने च शुभे शुभाहे इति तदा संनियुद्धादि विषयं अथ ध्रुव मृदु लघु नक्षत्रेषु हरेः श्रवणे अंतके भरण्यां आदित्ये पुनर्वसौ एषु शय्यासनादेः शय्या
खट्वादि रूपा आसनं पीठ मृगचर्मादि आदि शब्दात् पादुका तेषामुपभोगः इष्टः हितः दीपिकायां मैत्रेंदु पुष्य यम भादितिवह्नि चित्राहस्तोत्तरात्रयहरीज्य
विधातृभानि एतेष्वतीव शयनासनपादुकानां संभोगकार्यमुदितं मुनिभिः शुभाहे इति ॥ २१ ॥ २१ ॥ छ ॥ श्रीजगदंबा ॥

अथांधादिदिननक्षत्राणि शार्दूलविक्रीडितेनाह अंधाख्यमिति धाता रोहिणी विधिरभिजित् दहनभं कृत्तिका भगः पूर्वाफाल्गुनी अन्यत्स्पष्टं २१ अं
धादिनक्षत्राणां फलमनुष्टुभाह विनष्टार्थ इति अंधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्य लाभः शीघ्रं भवति मंदनक्षत्रेषु विनष्टार्थस्य प्रयत्नतो लाभो
भवति मध्येमध्यनक्षत्रे विनष्टार्थस्य दूरस्थनगरादतीवदूरदेशे श्रवणं खरीयद्द्रव्यममुकेन हृतं अमुकस्थले तिष्ठतीति लोकवार्ता भवति ल
ब्धिस्तु नास्ति स्वलोचननक्षत्रेषु श्रुत्याप्तीन श्रवणमपि लब्धिरपि न भवतीत्यर्थः २३ अथ धनप्रयोगेति निषिद्धनक्षत्राण्यनुष्टुभाह तीक्ष्णेति एते
स्तीक्ष्णदिननक्षत्रैर्यद्द्रव्यं स्वर्णादि दत्तं कालांतरं विनादत्तं न स्वसत्तापरित्यागेन निवेशितं स्वाप्तसमीपे प्रत्ययार्थं स्थापितं प्रयुक्तं कालांतरीति

अंधाख्यं वसुपुष्यधातृजलभद्वीशार्यमांत्याभिधं मंदाख्यं रविविश्वमैत्रजलपाश्लेषाश्विचांद्रं भवेत् मध्याख्यं शिवपि
त्रजैकचरणत्वाष्ट्रेंद्रविध्यांतकं स्वक्षं स्वात्यतिश्रवोदहनभाहिर्बुध्न्यरक्षोभगम् २२ विनष्टार्थस्य लाभोंधे शीघ्रं मंदे प्र=
यत्नतः स्याद्दूरे श्रवणं मध्ये श्रुत्याप्तीन स्वलोचने २३ तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितं प्रयुक्तं च विनष्टं च ह्रि
विष्ट्यापाते च नाप्यते २४ मित्रार्कध्रुववासवांबुपमघातोयांत्यपुष्येंदुभिः पापैर्हीनबले स्तनौ स्मरगुरौ शुद्धे वा भृगौ रवेर्वि

धुरःस्वरंकस्थे विद्दत्तं विनष्टं चौरादिनाहृतं स्वयमेव स्थानच्युतं द्रव्यं विष्ट्येन कदापि नाप्यते तथा विष्ट्यां भद्रायां पाते व्यतीपाते महापाते वा हृतं
द्रव्यं नाप्यते चकाराद्ग्रहणेपि वसिष्ठः ध्रुवोग्रसाधारणदारुणर्क्षे निक्षिप्तमर्थं त्वथवा प्रनष्टं चौरैर्हृतं दत्तमुपप्लुतं वा विष्ट्यं च पातेन न लभ्यते तद्धि
अत्रेदमनुसंधेयं तीक्ष्णमिश्रादिपंचदशभेषु मध्ये रोहिण्यार्यमक्षिप्रजलभद्वीशेषु दत्तं निवेशितं प्रयुक्तं द्रव्यं सेवाऽप्राप्तिः चौरापहृतस्य स्वतो गतस्य वा
धनस्य लाभ एवं तेषां रोहिण्यादीनां मध्यमलोचनेषु पाठसामर्थ्यादितिभावः २४ अथ जलाशयखनननृत्यारंभयोर्मुहूर्त्तं शार्दूलविक्रीडितेनाह मित्रा
र्केति अनुराधादिभिर्पंचदशनक्षत्रैः सद्भिः पापग्रहैर्हीनबलैर्बलरहितैः सद्भिः तनौ लग्ने स्मरगुरौ सति बुधे वा सति विदधामे ... केसति॥ ६ ॥ ३५

आप्येजलराशौविधौसति सर्वतोयाशनीवापीकूपतडागादीनांतोयाधाराणांखननंहितंस्यात् "आप्यांबुयांत्यपितृमित्रवसूत्तरार्कैंद्वीज्यभेषुखननंसलिलाशयानामितिव्यवहारतत्त्वोक्तेः" श्रीपतिः लग्नेजीवेज्ञेथवादुर्बलैश्चक्रूरैः शुक्रेवारिमेषुरणस्थे आप्येचंद्रे सर्वतोयाशयानामारंभाःस्युःसिद्धयेनिर्विकल्पमिति अथनृत्यारंभः तैःप्रागुक्तैर्नक्षत्रैर्व्यंभामघैः पूर्वाषाढामघारहितैःसंद्रभैर्ज्येष्ठासहितैः मित्रार्कध्रुववासवांबुपांत्यपुष्येंदुज्येष्ठानक्षत्रैः नृत्यारंभःशुभःस्यात् शुभेहिबुकेचतुर्थस्थानेलग्नेज्ञेसतिअब्जेचंद्रेज्ञराशौमिथुनकन्यास्थे सतीत्यर्थः २५ अथसेवकस्यस्वामिसेवायांमुहूर्त्तंशालिन्याह क्षिप्रेति क्षिप्राणिहस्ताभिजिदश्विपुष्याः मैत्राणिमृगरेवतीचित्रानुराधाः एतेषु नक्षत्रेषुबुधशुक्रसूर्यवारेसौम्येशुभग्रहेलग्नगेसति अर्केभौमेवाखलाभेदशमेएकादशेचस्थितेसतिसेवकेनस्वामिनःसेवाकार्यातत्र।

आप्येसर्वेजलाशयस्यखननंव्यंभामघैःसेंद्रभैस्तैर्नृत्यंहिबुकेशुभेस्तनुगृहेज्ञेब्जेज्ञराशौशुभं २५ क्षिप्रेमैत्रेवित्सितार्केज्यवारेसौम्येलग्नेर्केकुजेवाखलाभे योनेर्मैत्र्याराशिपोश्चापिमैत्र्यांसेवाकार्यास्वामिनःसेवकेन २६ स्वात्यादित्यमृदुद्विदैवगुरुभेकर्णत्रयाश्वेचरेलग्नेधर्मसुतारिशुद्धिसहितेद्रव्यःप्रयोगःशुभः॥ स्वामिसेवकनक्षत्रयोन्यो मैत्र्यां चपुनःराशिपोःसेव्यसेवकयोराशिस्वामिनोर्मैत्र्यांप्रीतौसत्यांसेवकार्याअन्यथानकार्या २६ अथद्रव्यप्रयोगऋणग्रहणमुहूर्त्तंशार्दूलविक्रीडितेनाह स्वात्यादित्येति स्वात्यादिचतुर्दशनक्षत्रेषुचरेमेषकर्कतुलामकराणामन्यतमेलग्नेधर्मेनवमेसुतःपंचमंअष्टमंएतेषांशुद्धिःनवपंचमयोःपापग्रहराहित्यंअष्टमेतुशुभपापराहित्यमेव रूपाशुद्धिस्तयासहितेलग्नेद्रव्यप्रयोगःऋणदानंशुभंस्यात् भौमपराक्रमेन्द्रपुष्याश्विनीचैवविशाखाश्रवणत्रयं पुनर्वसौनवसंसतिधनादिनिधिवर्त्तनं वर्त्तनमृणादिरूपणदानं मिश्रनक्षत्राद्विशाखायांनिषेधप्राप्तेऋणदानेएवविधिः त्वतेनष्टादौनिषिद्धेवशुद्धेषुधर्मात्मजनैधनेषुचरेविलग्नेद्रविणप्रयोगःइतिअथारेभौमवारेऋणंनग्राह्यंऋणंभौमे

ऋणच्छेदंकुजेकुर्यात्संचयंसोमनंदने अथतु विशेषे संक्रमसंक्रांतिदिवसे रुद्वौवृद्वियोगे करेहस्तनक्षत्रे अर्केन्हिरविवारेइतियत् तत्रा
पिनयात्यमित्येकसंबंधः यत्यस्माद्धेतोस्तद्दणतदंशोऋणगृहीतुःकुलेषुभवेत् तस्पुत्रपौत्रादिभिरपिपरिहर्तुमशक्यमित्यर्थः हस्तेः कैवारे
संक्रांतौयद्दणंस्यात्कुलेषुतत् वृद्धियोगेतथाद्देयमृणच्छेदंतुकारयेदितिज्योतिः प्रकाशोक्तेः बुधवारेऋणंकदापिनदेयम् २७ अथहलप्र
वाहमुहूर्त्तंशार्दूलविक्रीडितेनाह मूलद्वीशेति एतेःमूलादिभिरेकोनविंशतिनक्षत्रैः विनार्कशनिरविशनिवारौवर्जयित्वान्यवारेषु तत्रपा
पेहीनबलेनिर्बलेः चंद्रेजलराशिनवांशकेसति शुक्रेचंद्रेचमांसलेपुष्टेसतिउदितेसत्यर्थः गुरौलग्नेचसतितदाप्रथमंहलप्रवहणंशस्तंस्या
त् कश्यपः गुरौलग्नगतेशुक्रेबलिन्याप्यादयेविधौ शस्ताकृषिक्रियातत्रदुर्बलैः क्रूरखेचरैः अथसिंहेघटेकुंभेकर्केअजमेषएणेमकारे।

नारेस्यात्यमृणंतुसंक्रमदिनेवृद्धौकरेर्केन्हियन्नद्दंशेषुभवेद्दणंनचबुधेदेयंकदाचिद्धनं २७ मूलद्वीशमघाचरध्रुवमृ
दुक्षिप्रैर्विनार्कशनिंपापैर्हीनबलेविधौजललवेशुक्रेविधौमांसले लग्नेदेवगुरौहलप्रवहणंशस्तंनसिंहेघटेकर्कांजे
णधेटतनौक्षयकरंरिक्तासकष्ट्यांतथा २८ एतेषुश्रुतिवारुणादितिविशाखोडूनिभौमंविनाबीजोप्तिर्गदितोशुभात्वशुभ।
तोष्टांशीडुंरामेंदवः

धेतुलायां तथारिक्तासुषष्ठ्यां तथाशब्दोनुक्तसमुच्चयार्थस्तेनाष्टम्यामपिनशस्तः यस्मात्क्षयकरं २८ अथबीजोप्तिमु
हूर्तंफणिचक्रंचशार्दूलविक्रीडितेनाह एतेष्विति पूर्वोक्तनक्षत्रेषु श्रुतिवारुणादितिविशाखोडूनि विनाश्रवणादिवर्जितेषुमूलमघाध्रुवमृदुक्षि
प्रधनिष्ठास्वातीषुभौमंविनाभौमवारव्यतिरिक्तवारेषुबीजोप्तिः बीजवापनंशुभंज्ञेयंनारदः मृदुध्रुवक्षिप्रभेषुपितृवायुवसूडुषु संमूलभेषुबीजोप्ति
रत्युत्कृष्टफलप्रदा रवौरौद्राद्यपादस्थेभूसौसजायतेरजः तस्माद्दिनत्रयंतत्रबीजवापंपरित्यजेदितिराजमार्त्तण्डे आर्द्राप्रथमदिनत्रयनिषेधः अथबी
जोप्तौफणिचक्रं अशुभतोनविद्यंतेगावोयस्येतिअगुः राहुः तस्यभतदाक्रांतनक्षत्रंतस्मादादौ अष्टौभानि असंतिअसमीचीनानि ततस्त्रीणिशुभ

ततएकमशुभं ततस्त्रीणिशुभानि ततश्चत्वार्यशुभानि एवंवीजोप्तौसप्तविंशतिनक्षत्राणांशुभाशुभत्वमुक्तं रत्नमालायां मूर्ध्नित्रीणिगले
च यंचजठरेधिष्ण्यानि चद्वादशेत्यादि लग्नशुद्धिमाह वसिष्ठः भवत्रिसहजेपापैस्त्रिकोणकेंद्रेस्थितेश्चशुभैः कथितेशुभधिष्ण्येपिवशुभलग्नेनवी
जवापनंकार्यं अथहलचक्रमुच्यते हलेइतिहलचक्रेअर्कोझिताद्भान्नक्षत्रात्क्रमेणत्रीणिअसंति अशुभानि ततोष्टभानिसंतिशुभानि
ततोनवभानिअसंति ततोष्टौभानिसंति यथा सूर्यआर्द्रायांभुक्तभंमृगः तत आरभ्यत्रीणिअशुभानिततः पुष्यतोष्टभानिशुभानिततोविशाखा
तोनवभान्यशुभानि ततः शततारकातोष्टभानिशुभानि एवमष्टाविंशतिभानिजातानि तथावसिष्ठः अर्कगताद्गतसंस्थभत्रितयंतेअष्टमुभ.
यतस्त्विष्टंषोडशधिष्ण्यनवकं शिष्टमनिष्टंचलांगलेचक्रे कश्यपोपित्रिषष्टकनवर्क्षेषुसप्तस्वर्क्षे विमुक्तभात् हानिर्वृद्धिः कर्तृनाशोलक्ष्मी
प्राप्तिर्यथाक्रमादिति एवंबहुमुनिसंवादेसंतिद्वयोस्मृतेर्लात् त्रिवन्हित्रीणुत्रीणुत्रिसमा ३।४।३।५।३।५।३।८ण्यशुभदशुभानिक्रमाल्लांगला

रामेंदूग्निषुगान्यसच्छुभकराण्युक्तोहलेर्कोज्झिताद्भाद्रामाष्टनवाष्टभानिमुनिभिः प्रोक्तान्यसत्संतिच २९॥

रव्येशितियदुक्तंगणेशदैवज्ञैर्मुहूर्ततत्वेतच्चिंत्यंमूलवाक्यमूलाभावात् ननुश्रीपतिवाक्यं अर्कक्रांतगतान्यनडुहांनाशायमान्यग्रतो रुद्रोभत्रितयं
ततस्तुकृषिकृद्धातायशूलत्रयं धिष्ण्यानांनवकंतदंतरगतेस्यात्श्रियेपंचके पश्चान्यत्रितयंतदंत्रगदितंचक्रेशुभंलांगलेइतिमूलंचेत् नस्य
पश्चायतिवाक्येशब्दार्थः किंतुमूलवाक्यवेधेनस्वाज्ञानप्रकाशकः वाक्यार्थस्तु अर्कक्रांतमतानित्रीणिभानिवृषनाशकराणिसुः ततस्त्रीणिवृद्धो
तेपंचकइति तच्छब्देनहलोर्धदंडाशूलोर्धदंडानुच्यते अर्कक्रांतमतागतान्यनडुहांनाशायमान्यग्रतोवृद्धोभत्रितयंअयमंतरस्यपूर्वावधिः मध्येत
ततः परोपादानात्तुशब्दस्तु आनंतर्यद्योतनार्थः तुअनंतरंशूलत्रयंधिष्ण्यानांनवकंकृषिकृत् घातायेति अंतरस्योत्तरावधिः तयोरंतरगतेमध्ये वि
द्यमानाधिष्ण्यानांपंचकंचपंचकंचश्रियेस्थाप्येनपंचद्वयंचमेतियावत् यच्चान्यद्गदितंपश्चात्तंतेनशुभंतदंतरेण [illegible]

अथ शिरामोचनविरेचनादिमुहूर्त्तं शार्दूलविक्रीडितेनाह त्वाष्ट्रादि इति त्वाष्ट्रद्वये चित्रास्वात्यौ मित्रभाद्वये अनुराधाज्येष्ठे कभाद्वये रोहिणीमृ
गौ श्रोत्रश्रवणः क्षिप्रादिषु एकादश नक्षत्रेषु भौमार्कगुरुवारे शिरामोक्षणं रुधिरविहीनां नाडिकां शिरां तस्याः सूक्ष्मशस्त्रघातेन नरक्षतेः
रक्तमोक्षणं कुर्यात् अथ बुधार्कौ विना बुधस्य निवारी स त्वन्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यं औषधेन स्रवण विरेचकः वमनं कु
एतदाद्यं कुर्यात् मित्रक्षिप्रचरध्रुवेषु नवोदशनक्षत्रेषु रविवारे शुभग्रहवारे च विरोबुधस्य लग्नवर्गे जीवस्यापि लग्नवर्गेयदस्मिन्नक्स्मिंश्चिल्लग्ने पित्
रुबुधयोः षड्वर्गे सति तमोलग्ने गुरौ च सति कर्तुर्गुरुबले च सति धर्मक्रियाकोटिहेम्मरुद्राधिष्ठानादिरूपानुगदिता कथिता ३० अथ धान्यच्छेद

त्वाष्ट्रान्मित्रकभाद्वयेंबुपलघुश्रोत्रे शिरामोक्षणं भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्कौ विना। मित्रक्षिप्रचरध्रुवे
रविशुभाहे लग्नवर्गे विदो जीवस्यापि तनोगुरौ निगदिता धर्मक्रिया तद्बले ३० तीक्ष्णाजपाद्वरुणस्वन्हिदस्रश्रुतीदुस्वाती।
मघोत्तरजलांतकक्षपुष्ये मंदारिक्तरहिते दिवसे तिशस्ताधान्यच्छिदा निगदिता स्थिरभे विलग्ने ३१ भान्त्यार्यमश्रुतिम
घेंद्रविधातृमूलमैत्राख्यभेषुकथितकणमर्दनंस्यात् हीशाजपान्निर्ऋतिधातृशावार्यमर्क्षेसस्यरोपणमिहार्ककुजौ विना
सत् ३२ मिश्रोग्रपौद्रभुजगेंद्रविभिन्नभेषु कर्कोजतौलिरहितचतनौ शुभाहे ॥ ११ नं वसंततिलकेनाह तीक्ष्णाजपादेति एतेषु केन विंश
तिनक्षत्रेषु तथा भौमशनिरिक्तावर्जितदिने स्थिरलग्ने सति धान्यादीनां यवादीनां छिदा छेदनं निगदितं [illegible] ३१ अथ कणमर्दनं सस्यरोपणं च।
वसंततिलकेनाह भान्त्येति विधिः रोहिणी अंत्यरेवती एषु नवमेषु कणानां चणकादीनां मर्दनं पशुघातादिनां [illegible]करणं तत्समीचीनं स्यात् अथ विश
स्वादिषट्नक्षत्रैः आर्ककुजौ विना शनि भौम्यवारेषु सस्यस्य धान्यस्य रोपणं सत् शुभम् ३२ अथ धान्यस्थितिधान्यवृद्धिं वसंततिलकेनाह मिश्रोग्रे
ति मिश्रोग्रादिविभिन्नेषु मिश्रादिदशनक्षत्रेभ्योन्येषु सप्तदशनक्षत्रेषु तथा कर्कमेषतुलारहिते लग्ने मकरस्थिरद्विस्वभावलग्ने शुभाहे चंद्रबुधगुरुशु

क्रूरवारे धान्यानां स्थितिः एकत्रस्थले स्थापनं सा शुभकरी निगदिता अथ ध्रुवेज्याहरिनयोः दृशनक्षत्रेषु धान्यवृद्धिः ॥ मह्यमेतावद्धान्यं देहि इति सीमा
सहूयानंतरं सपादं सार्धं वा दास्यामि एवं रूपा वृद्धिर्निगदिता ३३ अथ शांतिकपौष्टिकादिकं वसंततिलकेनाह क्षिप्रेति क्षिप्रादिनक्षत्रेषु पौष्टि
कमंगलाभ्यां सह पौष्टिककर्मणा ग्रहशांत्या मंगलकर्मणा विना विनायकशांत्या सह शांतिकं दुष्टफलं मूलादिनक्षत्रोत्पन्नशांत्यादि शुभं स्यात् त
गनात् रवेः शुभे अर्के सति विधौ चंद्रे शुभखगते चतुर्थे गुरौ लग्नस्थे सति ततः शांतिकं मौढ्यादि दुष्टसमये गुरुशुक्रास्तादि दुष्टकाले नो शुभदं तन्निमित्त
केत्वाद्युत्पातदर्शने सति गुरुशुक्रास्तादावपि शुभं स्यात् उक्तं च शांतिकर्माणि कुर्वीत रोगे नैमित्तिके तथा गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्यते ३४
अथ होमाहुतिशुद्धिमनुष्टुभाह सूर्यभादिति सूर्याक्रांतनक्षत्रात् त्रित्रिभेन समयमध्ये चंद्रे चंद्रनक्षत्रे दिननक्षत्रे सति क्रमात् सूर्यादिमुखे होमा॰

धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यहूीशेंद्रमूलचरभेषु च धान्यवृद्धिः ३३ क्षिप्रध्रुवांत्यचरमैत्रमघासु शस्तं स्याच्छांतिकं ।
सह च मंगलपौष्टिकाभ्यां रवेर्के विधौ स्फुरखगते तनुते गुरौ नो मौढ्यादिदुष्टसमये शुभदं निमित्ते ३४ सूर्यभात्त्रित्रिभे चंद्रे ।
सूर्यविच्छुक्रपंगवः चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ३५ सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः
सुखः ॥

हुतिः पतति यथा सूर्याक्रांतनक्षत्रात् नक्षत्रत्रयमध्ये होमारंभे सूर्यमुखे होमाहुतिपातः ततो नक्षत्रत्रये बुधस्य मुखे शुक्रस्य ततः पंगोः शनेः ततः
श्चंद्रस्य ततः आरस्य भौमस्य ततः ईज्यस्य गुरोः ततः राहोः ततः शिखिनः केतोः एवं सति यद्दिने खले पापग्रहमुखे होमाहुतिः पतति स अनिष्टः न शुभदा अर्थाच्छु
भग्रहमुखे शुभा सूर्यनक्षत्राच्चंद्रनक्षत्रपर्यंत गणना ३५ अथ यद्दिने होमं चिकीर्षितस्तद्दिने वह्निनिवासवशेन शुभाशुभफलमिंद्रवज्रयाह सैकेति शुक्लप्रति
पद्गणनया वर्तमानतिथिर्गण्या एकयुता वर्तमानवारयुता चतुर्भक्ता यच्छेषं तच्चैव गुणमितं त्रिमितं शून्यमितं च तदा भुवि भूमौ वह्निवासो वसतिः फलमाह सौख्या
य होमे होमदिने भूमावग्नेर्वासे सति सौख्यं भवति अथ शशियुग्मशेषे एकमिते शेषेऽग्निवासो दिवि स्वर्गे फलं कर्तुः प्राणनाशः द्विमिते शेषेऽग्निवासो भूतले ॥ ६

नपरीसाधिवासश्चशनिभौमदिनेभवेत् ज्येष्ठाश्रवणहस्तश्च शनिभौमदिनेभवेत् ज्येष्ठाश्रवणहस्तश्च तथाग्नेयः पुनर्वसुः तद्वच्छतभिषाप्रोक्तास्वभियुक्त विवा
रणेद्विनाडीनक्षत्राणिदीपिकारत्नवचनात् जन्मर्क्षमाद्यं दशमं च कर्मसंघातिकं षोडशभं च मानसं स्यात्पंचविंशं समुदायमष्टादशं च योविंशतिभं विनाशनं एवं षट्
भोजनः सर्वोजातिदेशाभिषेकभैः नवभिर्नृपतिर्ज्ञेयो नाडीताराः सप्तांगकः इति नृजातिनक्षत्राणि वराहसंहितायां पूर्वात्रयसानलमघप्रजानां राज्ञां च पुष्येण सहो
त्तराच सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानि आदित्यहस्ताभिजिदश्विनानि वणिक्जनस्वाम्यमुपागतानि मूलत्रिनेत्रानिलवारुणानिभान्युग्रजा
तेः प्रभविष्णुतायाः सौम्यैंद्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि सार्पं विशाखा श्रवणे भरण्यश्चांडालजातेरभिनिर्दिशंतीति देशो ग्रामस्यादिकस्तन्न
क्षत्रं शतपदचक्रम् यथा वाराणस्याः नक्षत्रं रोहिणीति अभिषेकभं यस्मिन् राष्ट्रादिके नक्षत्रेण राज्ञाभिषेको जातस्तदभिषेकर्क्षमिति राज्ञां नवभा

ष्वंगे चरे तनुलवे शशिजीवताराशुद्धौ करादितिहरींदुकपौष्णरीसा ४३ अथाष्टशुद्धौपचयेषु लग्ने शुभदृग्युते चंद्रे त्रिषड्दशा
यस्थे सर्वारंभः प्रसिध्यति ४४ स्वातीन्द्रपूर्वाशिवसार्पभेषु ज्वरे नृमैत्रे स्थिरता भवेन्नुः याम्यश्रवोवारुणतक्षभे शिवाः१
घस्राहिपक्षो९५ द्व्यधिपार्कवासवे ॥ ४५ ॥ ७ निद्रुतरेपापदृग्युक्तानि ४१ अथ सामान्यतः शुभकार्ये लग्नशुद्धिमनुष्टुभाह व्यंगेति व्यंगो

द्वादशं अष्टमं एतत्स्थानद्वयं शुद्धं दोषरहितं यस्मिन् तस्मिन् स्वजन्मराशेर्जन्मलग्नाद्वा उपचयभवने त्रिषडेकादशदशमराशौ लग्नगते शुभैर्दृष्टे युते
च तथा चंद्रे त्रिषड्दशायस्थे सति सर्वेषां शुभकार्याणामारंभः सिध्यति तथा च वसिष्ठः उपचयभे लग्नगते व्ययनैधनशुद्धिसंयुते लग्ने उपचयगे शीत
करे मंगलकर्माणि कार्याणीति ४४ अथ नक्षत्रेषु ज्वरोत्पत्तौ सत्यां कियद्दिनसंख्या द्वितीये पजातिकयोपेंद्रवज्रया चाह स्वातीति मूलाद्यौ ति
स्वातीज्येष्ठापूर्वात्रयार्द्राश्लेषाक्षु ज्वरे ज्वरोत्पत्तौ सत्यां मृतिर्भरणं स्यात् अन्यासमैत्रे वानुराधयोर्ज्वरे सति नरो रोगस्य स्थिरता बहुकालं मरोगनिवृत्तिः
[illegible] श्रवणशततारा: तक्षभं चित्रा एतेषु नक्षत्रेषु शिवाः पक्षाः एकादशदिवसाः रोगः द्व्यधिपविशाखा अर्को हस्तः वासवं धनिष्ठा एषु त्रिषुभेषु

मूलं अग्निः कृत्तिका दास्त्रमश्विनी एषु नव दिवसा रोगः पित्र्यभे मघायां नखाः विंशतिर्दिवसाः बुध्न्यभं उत्तराभाद्रपदा अर्यमा उत्तराफाल्गुनी पुष्य
युस्त्वर्कः रोहिणी नगाः सप्त दिवसा रोगः अब्जैवैश्वं मृगोत्तराषाढयोः मासस्त्रिंशद्दिनानि रोगस्थैर्यं ततो रोगनिवृत्तिः अत्र शांतिर्वसिष्ठोक्ता रुद्रे सेशरूपं
नकेन कृत्वा तल्लिंगमंत्रैश्च स्रक्गंधपुष्पैः वस्त्रासितैर्गुग्गुलधूपदीपनैवेद्यतांबूलफलैश्च सम्यक् पूजां च कृत्वा भयनाशनाय द्विजाय दद्यात् तुलसी वा यो
आमयो रोगः अतुलमपरिमितद्रव्यं अथानंतरं यमाहिमूलभे भरण्यां श्लेषा मूले पुरु निका विशाखा आर्द्रा मघासु च सप्तनक्षत्रेषु वस्यकस्यचित् फणिदंशने
दर्पदंशनेन मृतिर्भवेत् अत्र सर्पदंशस्य एतेषु भैरवशेन चंद्रबलेन भवति तस्यैव सर्पदंशेन चंद्रबलं न भवति तस्यैकसर्पदंशेन चंद्रबलनभवति तस्यैव सर्प
दंशेन यत्र चंद्रस्तस्यैव गोचरे वाष्टमभवरः तदा नूनं भवेन्मृत्युः सपासक्तदेहिनः इति ४६ अथ शीघ्ररोगी मरणे विशिष्टयोगं द्वितीयोपजातिकयाह रौद्रार्द्रति

मूलाग्निरा स्वेन वपित्र्यभे नखा २० बुध्न्यार्यमेज्या द्वितिधात्रभेनगाः ७॥ मासोब्जवैश्वे थ यमाहिमूलभे मिश्रेशपित्र्ये फणिदंशनेमृ
तिः ४६ रौद्राहिशाक्रांबुपयाम्यपूर्वाहिर्दे ववस्त्वन्निषु पापवारे रिक्तांहरिस्कंदद्दिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः ४७ क्षिप्रा
हिमूलेंदुहरीशवायुभे प्रेतक्रियास्यात् झषकुंभगे विधौ॥ ८॥ रौद्रा दिनक्षत्रेषु पापवारे सतिरिक्ताः प्रसिद्धाः हरिर्द्वादशी स्कंदद्दिनं षष्ठी एतास्व

तिथिषु एवं विधे विशिष्टयोगे यस्य रोगोत्पत्तिर्भवति तस्य रोगिजनस्य शीघ्रं मृत्युर्भवेत् ४७ अथ प्रेतदाहमुहूर्तं प्रेतदाहादिनिषेधं चोपेंद्रवज्रयाह क्षि
प्रेति क्षिप्रादिनक्षत्रेषु प्रेतक्रिया प्रेतानां मृतानां प्रियउत्तमलोकप्राप्त्यर्थं श्राद्धादिक्रिया स्यात् यदि दाहिसमये कारणवशान्नावंप्रा अथ झषकुंभगे वि
धौ मीनकुंभस्थिते चंद्रे धनिष्ठोत्तरार्धादिपंचनक्षत्रे प्रेतस्य दाहो ज्वालनं सजेत् च पुनः यमदिग्गमनं दक्षिणदिशि गमनं यात्रा तथा शय्यायाः खट्वा
याः वितानं वयनं तथा गृहगोपनं गृहाच्छादनं आदिशब्देन तृणकाष्ठसंग्रहं त्यजेत् ब्रह्मपुराणे पंचके मरणमपि निषिद्धं कुंभमीनस्थिते चंद्रे मर
णं यस्य जायते न तस्योर्ध्वगतिर्दृष्टा संततेर्नशुभं भवेदिति तेन पंचके मृतस्य पंचके दाह॥ ॥ ॥ ॥ श्रीभगवते नमः॥

प्राप्तो सत्यांतस्पुत्तलविधिं कृत्वा दाहः कार्यः पश्चादाशौचनिवृत्त्यनंतरं शांतिकं कार्यम् परिपंचकमध्ये तेः प्रागेवमृतः प्रतिबंधवशात्संन्नके दाह प्राप्ते
पुत्तलविधिमकृत्वा दाहः कार्यः अशौचनिवृत्त्यनंतरं शांतिर्न कार्या एवं रेवत्यंतमृतस्य रेवतीमपहाय दाहः कार्यः न पुत्तलविधिः अशौचनिवृत्त्य
नंतरं शांतिरेव कार्यः मरणनिषेधसह निषेधप्रतिपादकवचनद्वयसद्भावादिति ४८ अथ काष्ठानां गोमयपिंडानां च संग्रहमुहूर्तं शार्दूलविक्रीडितेना
ह सूर्यक्षादिस्वभैरिति स्पष्टार्थं ४९ अथ त्रिपुष्करयोगं सफलं वसंततिलकयाह भद्रातिथिरिति भद्रासंज्ञकतिथिर्द्वितीयासप्तमीद्वादशी शनिभौमसूर्य
वारे भवति तथा द्वीशं विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा अदितिः पुनर्वसुः वन्हिः कृत्तिका वैश्वमुत्तराषाढा एषु नक्षत्रेषु उक्ततिः
थिवारनक्षत्ररूपे विशिष्टयोगे सति त्रिपुष्करः त्रिपुष्कर एव त्रैपुष्करः स्वार्थेण त्रिपुष्करसंज्ञको योगो भवति कीदृशः मृत्युविनाशवृद्धौ वैगुण्यदः।

प्रेतस्य दाहयमदिग्गसंत्यजेच्छय्यावितानं गृहगोपनादि च ४८ सूर्यर्क्षाद्धिस्वभैरधस्थलगतैः पाकोरसैः संयुतः शीर्षेषु
स्मात्रिभिः शवस्य दहनं मध्यस्थगैः सार्यभैः प्राणाशाद्विषुवेदभैः स्वसुहृद्दास्यात्सुगमो रोगभीः काष्ठादेः करणस्थ खं च ग॥
दितकाष्ठादिसंस्थापने ४९ भद्रातिथी रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवन्हिविश्वे ॥ ५ ॥ २ ॥

तद्दिने यदि कश्चिन्म्रियेत तदा पापारूपे त्रियेरन् यदि किंचिद्वस्तु विनष्टं तदा तस्य तद्वस्तुत्रयनाशः तथा किंचिद्वस्तु लब्धं तदा त्रिगुणं तद्वस्तुलाभः वसिष्ठः।
रविरविजभौमवारे भद्रायां विषमपादभं चेत् त्रैपुष्करारव्ययोगस्त्रिगुणफलो युगुलभे द्विगुणम् पदा त्रियन्नक्षत्रस्यैव चरणः पूर्वराशौ चरणत्रयमपररा
शौ भवति तानि विषमचरणानि द्वीशार्यमनेत्यादीनि अथ वंसु धनिष्ठा नक्षत्रं चित्रा चाद्रमृगः एतानि भानि भद्रातिथयः रविशनिभौमवारेश्च अत्रापि वि
शिष्टयोगे द्विपुष्करनामयोगे भवति तत्फलम् मृत्युविनाशवृद्धौ द्वैगुण्यकृद्भवति तत्र शांतिमाह नारदः द्विपात्तदोषनाशाय गोमयं मूल्यमेव वा द्विपुष्करे द्व
यं दद्यात्तदोषस्त्वसमत्र तरति अथ त्रिपुष्करे कश्यपेन रेवेस्याने दहस्येति वारेष्वुक्तः ॥ ५ ॥ शिवः ॥ रामः ॥

मु॰टी॰
न॰प्र॰
२५

भद्रातिथिः शनीज्यारवारे चेद्विषमांघ्रिभं त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यंघ्रिभं मृताद्यमिति इदमेव दृष्ट्वा श्रीपतिनाप्युक्तं विषमचरणं धिष्ण्यादित्यादि अत्र
कश्यपवाक्ये मृतावेव त्रिगुणफलतोक्ता ग्रंथकृता तु श्रीपतिवाक्यानुरोधान्मृत्यविनाशवृद्ध्यादि युक्तं ५० अथ शवप्रतिकृतिदाहे निषिद्धका
लं शार्दूलविक्रीडितेनाह शुक्रारेति एवंविधे दिने शवस्य प्रतिकृतिः पर्णशरादिना सावयवबलकल्पनं तस्य दाहो न कार्यः कुतः द्विविधो हि प्रेत
संस्कारः प्रत्यक्षशरीरस्यैकः तत्प्रतिकृतेरन्यः तत्र प्रत्यक्षशरीरसंस्कारे दिनविचाराभावः गार्ग्यः प्रत्यक्षशरीरसंस्कारे दिनं नैव विशोध
येत् इति प्रतिकृतिसंस्कारकालत्रयं अशौचमध्ये वर्षमध्ये वर्षानंतरं चेति अशौचमध्ये क्रियते पुनः संस्कारकर्म चेत् शोधनीयं दिनं तत्र
यथासंभवमेव तु अशौचविनिर्वृत्तौ चेत्पुनः संक्रियते मृतः संशोध्येव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदीति गार्ग्यवचनाद्दिनशुद्धिरुच्यते शुक्रारा

त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्द्विकृतश्च चांद्रे ५० शुक्रारार्किषु दर्शभूतमदने नंदासु तीक्ष्णोग्रभे पौष्णे
वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने याम्येऽब्दात्परतश्च पातपरिघे देवेज्यशुक्रास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो

किंदिने शुक्रभौमशनिवारे शवप्रतिकृतेर्दाहो न कार्य इति त्रयस्यैकं संबंधः दर्शोमावास्या भूतश्चतुर्दशी मदनस्त्रयोदशी (न पक्षे सिते ५१
नंदाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु तथा तीक्ष्णोग्रभे मूलार्द्राज्येष्ठाश्लेषास्तीक्ष्णानि पूर्वात्रयमघाभरणीउग्राणि पौष्णं रेवती वरुणं
शततारा पूर्वोक्ते त्रिपुष्करदिने न्यूनाधिमासे क्षयमासे अधिकमासे अयने याम्ये अब्दात्परतः अब्दमध्ये याम्यायनेपि कार्यः नंदामदनभूतामा
पातवैधृतिविष्टिषु शुक्रार्किभौमपरिघध्रुवमिश्रोग्रमैत्रभैः कर्तुश्चंद्रे द्विषे तारासे जन्मप्रत्यरितारिके त्रिपाद्भे सितपक्षेऽयने याम्येऽब्दतः परम् श
वप्रतिकृतेर्दाहः शक्रेज्यास्ताधिमासके नेष्टो मध्ये द्विपान्मैत्रद्वीशादितिभगध्रुवैः इति निबंधोक्तेः दिनक्षयोपि वर्ज्यः वर्जयेत्तु दिनक्षयमिति गार्ग्योक्तेः
पातपरिघे पातो व्यतीपातो महापातश्च परिघश्च एतेषु दाहो न कार्यः देवेज्यशुक्रास्तके दाहो न कार्यः भद्रायां वैधृतौ च तथा सिते शुक्लपक्षे इति ५१ ॥

राम॰
२५

अथतेनैवकंद्दसावर्ज्यैत्तराण्याह जन्मप्रत्यरितारपोरिति कर्त्तुः जन्मप्रत्यरितारयेः जन्मताराउत्पत्तिनक्षत्रंदशमैकोनविंशंचेति प्रत्यरि
ता राजन्मभात्संचम चतुर्दशचयो विंशनक्षत्रे तथाकर्त्तुर्मृतिसक्षत्रा सेज्जेअष्टम चतुर्थद्वादश स्येचंद्दे सतिदाहोनसत्नग्रशस्तः अथमध्यमनक्ष
त्राणि मैत्रमनुराधा भगः पूर्वाफाल्गुनी अदितिः पुनर्वसुः भुवाणि रोहिण्युत्तरात्रयं विशाखाद्य घ्रिभंमृगचित्राधनिष्ठाः ज्ञेबुधेपि सवदाहोमध्यमः
अथोत्तमानि अर्केज्याभ्यासहितो विधुः अर्केगुरुचंद्रवारेतथाश्रवणहस्तस्वातीअश्विनीपुष्येषुपंचनक्षत्रेषुशवप्रातिकर्तदाहः श्रेष्ठः इदमखि
लमाशौचान्तपरतः अनंतरं मध्येतुयथासंभवंकिंबिहुनामीकारेणविचार्यं ५२ अथमूलनक्षत्रजातस्य विशेषमुपजातिकयाह अभुक्तमिति ना
रदः अभुक्तमूललक्षणंज्येष्ठांत्यमूलादिभवंघटीचतुष्टयंजनो ज्येष्ठांत्यघटीचतुष्टयंमूलादि घटीचतुष्टयंचेत्यर्थः नारदः योज्येष्ठामूलयोरंतरालप्र

जन्मप्रत्यरितारयोर्मृतिस्करवांत्येज्ञेचकर्त्तुर्नेसन्मध्यमैत्रभगादितिध्रुवविशाखाद्यंघ्रिभेज्ञेपिच श्रेष्ठोर्केज्यविधोर्दि
नेश्रुतिकरस्वात्यश्विपुष्येतथात्वाशौचात्परतोविचार्यमखिलमध्येयथासंभवं ५२ अभुक्तंमूलंहि घटीचतुष्टयंज्येष्ठांत्य
मूलादिभवं हिनारदः वसिष्ठएक द्विघटीमितंजगौबृहस्पतिस्त्वेक घटीप्रमाणकम् ५३॥

हरजः शिशुः अभुक्तमूलजः सा
र्पमघानक्षत्रयोरपि अयमेवमुख्यः पक्षः कश्यपारिवृद्धमुनिसंवदात्तुकश्यपः ज्येष्ठांत्यमूलयोरंतरालयानोद्भवः शिशुः अभुक्तमूलजः सोथ
त्वाश्लेषापित्र्ययोरपि वसिष्ठोपिभुजंगपैत्र्यरपौष्णभान्यंतरयभानांचतराल अभुक्तमूलंप्रहरप्रमाणंत्यजेत्कृतंतत्रभवाक्षता चेति वसि
ष्ठएक द्विघटीमितंजगौज्येष्ठांतेएकघटिकामूलाद्यघटिकाद्वयमित्यर्थः इदंवसिष्ठेनकेचिन्मतेमुक्तम् येकस्तद्वाक्यकेचित अपरेइतिप्रोक्तेः त
द्वाक्यंच ज्येष्ठांत्यपादघटिकामित्तमेवकेचिन्मूलंत्वभुक्तमपरेपुनरामनंति मूलाद्यपाद्यघटिकाद्वितयेनसार्द्धमष्टौसमाः परिहरेदिहजन्मभाजइति।
बृहस्पतिस्त्वेकघटीप्रमाणंकजगौ ज्येष्ठांत्यसार्धघटिकास्लाद्या चार्धघटिकेत्यर्थः गुरुः ज्येष्ठांत्यघटिकार्धंचमूलादौघटिकाद्वकं तयोरंतर्गतानाडीत्वभु

अथान्ये आचार्या उपजातिकयाहुः अथो त्वरन्य इति आचार्याः प्रोचुः मूलस्य प्रथमा अष्टघटिका शाक्रस्य ज्येष्ठायाः अंतिमाः पंचनाडिकाः एवमु
भयोरंतराले त्रयोदश घटिका अभुक्तसंज्ञकाः प्रोचुः उक्तं च ज्येष्ठांत्याघटिकाः पंचमूलाद्यावसुनाडिकाः अभुक्तमिति तज्ज्ञेयं तत्र जातं शिशुं त्यजेत्
तितत्फलमाह तत्राभुक्तमूले जातं शिशुं बालं बालो वा पिता परित्यजेत् त्यागाशक्तौ वा पिता अस्य बालस्याष्टसमाः अष्टौ वर्षाणि मुखं न पश्येत् नारदः अ
भुक्तमूलजं पुत्रं पुत्रीमपि परित्यजेत् अथवाब्दाष्टकं तातस्तन्मुखं न विलोकयेदिति अत्र घटीनां न्यूनाधिककथनं दोषस्याधिक्याल्पत्वकथनार्थं ५४
अथ मूलाश्लेषाजातस्य चरणवशेन फलमुपजातिकयाह आद्ये पितेति मूलप्रथमचरणे जातस्य बालस्य पिता नाशं प्राप्नोति द्वितीयचरणे जननी मा
तानाशं प्राप्नोति सापत्नमातरि मातृशब्दो गौणः तेन गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति जननीपदप्रयोगः तृतीयचरणे धनं नश्यति चतुर्थे चरणे बाल

अथो त्वरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रांतिमपंचनाड्यः जातं शिशुं तत्र परित्यजेद्वा मुखं पितास्याष्टसमा
नपश्येत् ५४ आद्ये पिता नाशमुपैति मूलपादे द्वितीये जननी तृतीये ॥ छ ॥

स्य शुभः अत्र विशेषो नारदेनोक्तः दिवा
जातस्तु पितरं रात्रौ तु जननीं तथा आत्मानं संध्ययोर्हंति नास्ति गंडो निरामयः वसिष्ठस्तु मूलाद्यपादोत्थरात्रिभामेतदात्मनो नास्ति पितुर्विनाशः द्वितीय
पादो दिनगो यदि स्यान्नमातुरप्यपि तदास्ति दोषः अथानंतरं शान्त्यम् लाश्लेषाद्यांत्यास्वनुष्ठितया सर्वत्र चरणचतुष्टयेपि शुभम् अनिष्टफलनाशकं क
ल्याणं स्यात् शास्त्रोक्तरीत्या खलु सूतकान्ते मासे तृतीयेप्यथवत्सरान्ते इति कालत्रयं वसिष्ठेनोक्तं गंडे तु विशेषः मातृगंडे सुतं जातं सूतकांते विचक्षणः कुर्याच्छां
तिं तदा सेवा तद्दोषस्याप्यनुत्तये शिष्टास्तु सर्वत्रापि यन्न सत्रे जन्मनक्षत्रे स्वशांतिरिति व्यवहरंति अथाहिभे विलोममिति आश्लेषायां मूलपादोक्तं फलं विलो
मं विपरीतं ज्ञेयम् मूलस्य प्रथमपादे पितृनाश इत्युक्तं सोऽश्लेषाचतुर्थपादे तत्रस्य द्वितीयपादे मातृनाशः सोऽश्लेषातृतीयचरणे मूले तृतीयचरणे धननाश उक्तः
सोऽश्लेषाद्वितीयचरणे [illegible] शुभम् ॥ ६ ॥

तदाश्लेषाप्रथमचरणेज्ञेयम् अत्रबहुविचारोस्तिग्रन्थभूयस्त्वभयान्नलिख्यते अथकैश्चिन्मूलवृक्षादिविचारउक्तः जयार्णवेतन्मूलंस्तंभंत्व
चाशास्वापत्रपुष्पफलंशिखामुनयोष्टौदिशोरुद्राः सूर्याः पंचाब्धयोग्नयः मूलेतुमूलनाशःस्यात्स्तंभेवंशविनाशनं त्वचिमातुर्भवेत् क्लेशः
शाखायांमातुलस्यच पत्रेस्वज्यं विजानीयात् पुष्पेमंत्रिपदंस्मृतं फलेचविपुलालक्ष्मीः शिखायामल्पजीवितं अथमूलपुरुषयोगेघटीन्यासस्तत्रैव।
मूलस्यघटिकान्यासोमूर्ध्निपंचनृपोभवेत् मुखेसप्तमृतिःपुत्रोऽस्कन्धेवेदामहाबलः बाह्वोरष्टौवशीपाण्योस्तिस्रोहत्यान्वितोभवेत् हृदिरवेटाभूपश्च
याःफलार्थमूलांगविभागस्तत्रैव चतस्रोनाडिकाःशीर्षेकुर्वंतिपशुनाशनं मुखेषट्धनिहानिः स्यात्कंठेपंचधनागमः कौटिल्यंहृदयेपंच
बाह्वोर्वित्तागमंततः वेदाः पाण्योर्दया धर्मवेदागुह्येतिकामिनी ज्येष्ठमातुलनाशश्चजंघयोर्युगनाडिका ज्येष्ठभ्रातृविनाशश्चचतस्रोजानुयु॰

धनंचतुर्थीस्यश्रमोथशांत्यासर्वत्रसत्स्यादहिभेविलोमं ५५ स्वर्गेशुचिप्रोष्ठपदेषुमाघेभूमौनभःकार्त्तिकचैत्रपौषे॥ ॐ ॥

ग्मके पादयोर्दशनाड्यश्चतत्रैवधन्यमादिशेत् इतिमूलप्रसूतायामुनिभिःफलमीरितं अथाश्लेषाजातयोःपुत्रकन्ययोरंगविभागेनफलंतत्रैव॥
मूर्ध्निपंचस्कराज्याप्तिमुखेसप्तपितृक्षयः नेत्रेद्वेजननीनाशः ग्रीवायांत्रिषुलंपटः स्कंधेवेदागुरोर्भक्तिः हस्तेष्टौचबलीभवेत् हृद्येकादशभिश्चा
त्मघातीसजायतेनरः स्त्रीवानाभौभ्रमःषड्भिर्गुह्येनवतयोधमः पादेपंचधनंहंतिसार्पादितत्फलंक्रमात् अथाश्लेषावृक्षोपितत्रैवोक्तः फलपुष्पद
लशाखात्वग्लताकंदएवच सार्पवत्स्यादशाक्षाकस्वरविश्वार्कसागराः नाडिकास्तद्वद्बालेफलंज्ञेयंयथाक्रमं श्रीःश्रीराजभयंहानिःमातृपित्रा
त्मसंशयइति अयंविभागोनक्षत्रस्यषष्टिघटिकात्मकोज्ञेयः न्यूनातिरिक्तेअनुपातः ५५ अथमूलनिवासफलमिंद्रवज्रयाह स्वर्गइति श्रुचिरा
षाढः प्रोष्ठपदोभाद्रपदः इषआश्विनः माघःप्रसिद्धः एषुमासेषुमूलंनक्षत्रंस्वर्गेस्ति श्रावणकार्त्तिकचैत्रपौषेषुभूमौतिष्ठति॥ छ ॥ ॐ ॥रामः

मु.टी.
न.प्र.
२७

तपस्यः फाल्गुनः शुक्रो ज्येष्ठः फाल्गुनमार्गशीर्षवैशाखज्येष्ठेषु अधः पाताले मूलं तिष्ठति तत्फलं च यदा मूलनक्षत्रं यस्मिन्मासे यत्र भवति तत्रैव
वस्वर्गमर्त्यपातालेषु एवं प्रोक्तं शुभाशुभफलं ददाति तेन इत्यादिभावे स्वर्गपाताल स्थे मूले दोषाभावाच्छांतेरनावश्यकत्वं ज्ञेयं यदा तु भूमावेव मू
लं तदा शांतिरवश्यं विधेयेति शक्तेन उक्तं च ज्योतिषार्णवे भूमिष्ठदोषबहुलं स्वल्पमन्यत्र संस्थितमिति ज्योतिर्निबन्धे मूलाश्विपित्र्य चरणप्रथमे
चन्द्रे पौष्णेंद्रयोश्च फणिनश्च तुरीयपादे मातुः पितुः स्ववपुषोपि करोति नाशं जातो यदा निशि दिनेप्यथ संध्ययोर्वेति तत्रापि शांत्याशुभं भवतीति ज्ञेयं
५६ अथ मूलप्रसंगाद्दुष्टेषु गंडांतादिनिमित्तेषु जातस्यारिष्टपरिहारं च शार्दूलविक्रीडितेनाह गंडांतेंद्रभेति एतेषु शिशोरुत्पत्तिर्नेष्टा दुष्टफल
दा गंडांतं तिथिनक्षत्रलग्नानां संधिः तल्लक्षणं ज्येष्ठापौष्णभेत्यादिना वक्ष्यति इंद्रभं ज्येष्ठानक्षत्रम् शूलयोगः पातो महापातः परिघव्याघातगंडयो

मूलं त्वधस्तात्तु तपस्यमार्गवैशाखशुक्रेष्वशुभं च तत्र ५६ गंडांतेंद्रभशूलपातपरिघव्याघातगंडावमे संक्रांतिव्यतिपातवैधृति
तिसिनीवालीकुहूदर्शके वज्रे कृष्णचतुर्दशीषु यमघंटे दग्धयोगे मृतौ विष्टौ सोदरभे जनिः पितृभे शस्ताथ भाशांतितः ५७ ॥

गाः अवमस्तिथिक्षयः संक्रांतिः सूर्यसंक्रमणपुण्यकालः व्यतीपातवैधृती योगौ सिनीवाली दृष्टेंदुरमावास्या कुहूर्नष्टेंदुरमावास्या सा दृष्टेंदुः सिनी
वाली सा नष्टेंदुकला कुहूरित्यभिधानात् दर्शश्चंद्रदर्शनरहितामावास्या एतद्दोषेषु प्रतिपदं यिष्यते वज्रे वज्रयोगे कृष्णपक्षचतुर्दश्यां यमघंटे
मघाविशाखास्वित्युक्तदग्धयोगे सूर्येशपंचाग्निरसाष्टनंदा इत्युक्तेः मृतौ द्वीशानीया इत्युक्तैर्मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा नक्षत्रे
पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सुतस्य सुताया वा जन्म चेत्स्यात्तदानिष्टकृत्स्यादित्यर्थः दुष्टनिमित्तस्योपलक्षण
त्वात् जातजन्माप्यनिष्टम् सजातीयापत्यप्रसवानंतरं विजातीयापत्यप्रसवश्चेतरः यथा पुत्रत्रयप्रसवानंतरं कन्याजन्म कन्यात्रयप्रसवानंतरं पुंजन्म
तज्जनिः शांतितः वसिष्ठादिप्रोक्तशांत्या स्वनुष्ठितया शुभा परिणामसुखदायिनीत्यर्थः ५७ ॥ ५७ ॥ ५७ ॥ श्रीमहाकालीमहालक्ष्मीमहास

श्म:
२७

अथ संमुखशुक्रे दोषमुपजातमाह उदेतीति शुक्रो यस्यां दिशि प्राच्यां प्रतीच्यां वा कालवशेनोदयं करोति तत्र गंतुः पुंसः शुक्रः संमुखः अयं प्रथमः
प्रकारः अथवा गोलभ्रमवशेन यत्र यस्यां दिशि उत्तरस्यां दक्षिणस्यां वा यायी दिगच्छेत् तत्र गंतुः पुंसः संमुखः शुक्रः स्यात् अयं द्वितीयः प्रकारः अथ य
त्र ककुंभसंघे प्राच्यां दिशि कृत्तिकादिन्यासवशेनायं यद्दिङ्नक्षत्रे चरति तत्र दिशि गंतुः संमुखः शुक्रः स्यादित्ययं तृतीयः प्रकारः स्यात् अत्रिः अग्निम
तः समुदये द्विचरेद्यत्र गोलके यद्वारभेषु विचरेत् त्रिविधं प्रतिभार्गवमिति यत्रोदित इति यस्यां दिश्युदितः शुक्रो दृश्यते तां दिशमेव न गच्छेत् अन्यां दिश्य
पि यथासंभवं नेयात् मुखे शुक्रे कार्यहानिः प्रतिशुक्रं पराजय इति नारदोक्तेः अवश्यकर्तव्ये गमने शांतिमाह वसिष्ठः भृगुर्लग्ने भृगोर्वारे भृगुर्वर्गे भृगूदये
उपोष्य भृगुवारेपि यावच्छुक्रोदयं प्रति रजतेनैव शुक्रेन न कारयेत्प्रतिमां भृगोः लिखेदष्टदलं पद्मं कांस्यपात्रे च तंडुलैः शुक्लसूक्ष्मावरैर्वैश्य प्रतिमां तत्र पूज

**उदेति यस्यां दिशि यत्र याति गोलभ्रमाद्वाथ ककुंभसंघे त्रिधोच्यते संमुख एव शुक्रो यत्रोदितस्तां तु दिशं न यायात् ४० ॥**

येत् शुक्लपुष्पाक्षतैर्गंधैर्मुक्ताहारैर्विचित्रैः उपचाराणि कार्याणि शुक्रं ते अन्यदिशश्च वा तन्मंत्रेण जपं कुर्यात्सम्यगष्टोत्तरं शतं कर्मांते तेन मंत्रेण भ
क्त्या चार्घ्यं प्रदापयेत् श्वेतगंधाक्षतैः पुष्पैः क्षीरमिश्रेण वारिणा दैत्यमंत्री दिवादर्शी चोशना भार्गवः कविः श्वेतोथ मंडलीकोभ्यो विधिस्थो भृगवे नमः
इत्वेस्यर्घ्यं प्रयत्नेन प्रार्थयेद्भक्तितः अनेनैव तु मंत्रेण प्रांजलिः प्रणतः स्थितः नमस्ते पूजया नाथ शुक्र संमुखजं समुद्भवं दोषं विनाशय क्षिप्रं रक्ष मां ते
जसंनिधे इति प्रार्थ्य प्रयत्नेन प्रतिमा भूषणान्विता दैवज्ञायैव दातव्या श्वेतां धेनुं सवत्सां सितवस्त्रां शिष्टेभ्यो दक्षिणां दद्याद्यथा वित्तानुसारतः ब्राह्मणान्भोज
यित्वा पश्चात्स्वयं भुंजीत बंधुभिः इतरेषां ग्रहाणां च पूजां कुर्यात्प्रयत्नतः तत्क्षणात्संमुखजो दोषस्तत्क्षणादेव नश्यति दीपिकायां तु दानमेवोक्तम् सितमश्वं सितव
स्त्रं हेममौक्तिकसंयुतं ततो द्विजाय प्रदद्यात् सितशुक्रप्रशांतय इति ४० ॥ ४० ॥ ४० ॥ ४० ॥ ४० ५। ६

अथवक्रास्तादिदोषंस्यापवादमुपजात्याह वक्रास्तेति भृगोः सुते शुक्रे वक्रोपगते अस्तोपगते नीचोपगते च उपलक्षणमिदं ग्रहयुद्धपराजिते वर्णरहिते वासति राजा परराष्ट्रं न व्रजन् सन् हि निश्चये विद्विषां शत्रूणां वशं याति वृद्धो भूमतीत्यर्थः भरद्वाजः विवर्णे विजिते वापि वक्रिते वा सिते स्तगे यात्रा संत्रग तेवापि तद्वत् शते तन्नि रीक्षिते भौमांशे भौमसंयुक्ते मंदांशे मंदसंयुते यात्रा नैव कुर्वीत तस्यायुर्बलहानिदेति बुधाः इति तत्र शुक्रास्तेयदि बुधोनुकूलो द्वादि कस्तस्मिन्नेव तद्रा संचलनात् सन् राजारिपून् शत्रून् जयेत् नैवेति प्रतीक्ष्यं केंद्र ध्रुवं संमुखे सति गंतुः राज्ञो नैव जयः किंतु पराजयः अयंतु प्रतिशुक्र विचा रो नृणां प्रथमगमने राज्ञां तु समरयात्रायामाद्युः रेभ्यः प्रतिशुक्रादि दोषो ब्रूनेतनेगमनेनृणां राज्ञां विजययात्रायां नान्यथा दोषमर्हतीति ५१ अथ विशेषं शा लिन्याह यावच्चंद्र इति चंद्रो यदा पूषभाद्रेवतीनक्षत्रादारभ्य कृत्तिकाये शेरेवत्यश्विनी भरणी कृत्तिका प्रथम [illegible] वत्तिष्ठति तावच्छुक्रोंधो ज्ञेयः द

वक्रास्तनीचोपगते भृगोः सुते राजा व्रजन्याति वशं हि विद्विषां बुधोनुकूलो यदि तत्र संचलन् रिपून् जयेन्नैव जयः प्रतीदुजे॥ ५१ यावच्चंद्रः पूषभात्कृत्तिकाद्ये पादे शुक्रोंधोनदुष्टोऽग्रदक्षे मध्ये मार्गे भार्गवास्तेपि राजा तावत्तिष्ठेत्संमुखत्वेपि तस्य ५२ कुंभकुंभांशकोत्याज्यो सर्वथा यत्नतो बुधैः तत्र प्रयातुर्नृपतेरर्थनाशः पदे पदे ५३॥ दृष्टोपि शुक्रोदर्शनकार्यं न करोतीत्यर्थः यः

तदेवाह न दुष्ट इति अंधो यदा अग्रे संमुखे दक्षे दक्षिणभागे च दुष्टो न स्यात् मध्ये मार्गमिति समुहूर्तप्रस्थितोपि [illegible] मध्यमार्गे मार्गमध्ये यदि शुक्रास्तं भवे त्तावत्कालं तस्मिन्नेव प्रयाणे तिष्ठेत् यावच्छुक्रोदयो भवेत् यदि गच्छतो राज्ञो दैवात्संमुखः शुक्रश्चेत्तावत् [illegible] संमुखत्वेपि तस्मिन्नेव प्रयाणे ति ष्ठेत् उपलक्षणत्वाद्गुरावप्येवं विधेद्रष्टव्यं पराशरः जीवः शशांकः शुक्रो वा मार्गमध्येस्तगो यदि तत्रैव निवसेद्राजा यावदर्कोदितो भवेदिति मार्गमध्ये बुधास्ते दोषः यदा तु मार्गमध्ये बुधोदयो भवेत्सच पुनः संमुखो भवेत्तदा तु पुनर्दोषः एव वसिष्ठः संमुखं चंद्रजं यत्र मार्गमध्योदितो यदि यावदस्तंगते तस्मिन्नस्ता [illegible] मेवसंवसेदिति अथ निषिद्धलग्नमनुष्टुभाह कुंभकुंभांशकेति स्पष्टार्थः ५३ ॥ ५३ ॥ ५३ ॥ ५३ ॥ [illegible] ॥

अथान्यदिंद्रवज्रयाह दिग्द्वारिभेइति पूर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः इति दिग्राशिषु गंतव्यदिगवस्थितेषु समुत्थायायात्रा प्रशस्ता प्रशस्तत्वमाह।
अर्थदात्रीजयकारिणी चेति यथा मेषः पूर्वस्याम् वृषो दक्षिणस्यां मिथुनः पश्चिमायां कर्क उत्तरस्यां एवं सिंहादयो धनुरंतः पश्च पूर्वादिदिक्षु ज्ञेयाः हानिमिति
दिक्प्रतिलोमलग्ने विपरीतदिगवस्थितेलग्ने यथा पश्चिमायां मेषः उत्तरस्यां वृषः पूर्वस्यां मिथुनः दक्षिणस्यां कर्कः एवं पुनः पश्चिमादिदिक्षु सिंहाद
यो धनुरादयश्च ज्ञेयाः तादृशे लग्ने गंतुः यात्रा हानिं द्रव्यादिनाशं शत्रुभ्यो भयं च कुर्यात् दिग्द्वारभे लग्नगते यात्रार्थविजयप्रदा लग्ने दिक्प्रतिलोमेसा
हानिदा शत्रुभीतिदेति वराहोक्तेः ४७ अथ शुभलग्नानि वसंततिलकयाह राशिरिति गंतुः पुंसः स्वजन्मसमये यो राशिः शुभग्रहैश्चन्द्रबुधगुरुशुक्रैः

दिग्द्वारभे लग्नगते प्रशस्ता यात्रार्थदात्री जयकारिणी च हानिं विनाशं रिपुतो भयं च कुर्यात्तथा दिक्प्रतिलोमलग्ने ४७॥
राशिः स्वजन्मसमये शुभसंयुतो यः स्वारिभाद्विधनगो यदि वेशिसंज्ञः लग्नोपगः सगमने जयदोथ भूपयोगैर्गमो वि
जयदो मुनिभिः प्रदिष्टः ४८ सूर्यः सितो भूमिसुतोथ राहुः शनीशशीज्ञश्च बृहस्पतिश्च प्राच्यादितो दिक्षु विदिक्षु चापि दिशा
मधीशाः क्रमतः प्रदिष्टाः ४९ केंद्रे दिगधीशे गच्छेद्वनीशः लालाटिनि तस्मिन्नेयादरिसेनाम् ५० ॥ ॥ संयुतोस्तिस राशिर्यात्राल

ग्नोपगः शुभः अथवा स्वारिभात् स्वशत्रुजन्मराशिजन्मलग्नाद्दृष्टमो यो राशिः स चेद्यात्रालग्नोपगतः शुभः स्यात् अथ यो राशिर्वेशिसंज्ञः जन्मसम
ये सूर्याक्रांतराशेर्द्वितीयो राशिर्वेशिसंज्ञः स चेद्यात्रालग्नोपगः स्यात् तदा गमने जयदः स्यात् अथवा भूपयोगैर्जातके कथितैर्यात्रालग्नस्थितैर्गमो मुनि
भिर्विजयदः प्रोक्तः जातके राजयोगा द्रष्टव्याः ४८ अथ दिक्स्वामिन उपजातिकयाह सूर्यः सित इति स्पष्टार्थः ४९ अथ दिगीशप्रयोजनं मध्याछंदसाह केंद्र इ
ति तस्मिन्दिगीशे ललाटिनि सति अरिसेनां नेयात् न गच्छेत् ५० ॥ ५० ॥ ५० ॥ ॥ ॥ ॥

अथ ललाटियोगानु शार्दूलविक्रीडितेनाह प्राच्यादाविति प्राच्याद्यष्टदिक्षु क्रमेण विलग्नसदनात् एतेषु भावेषु सूर्यादिग्रहस्थिता लालाटिकाः स्युरिति
वाक्यार्थः यथा तनौ लग्नस्थः तरणिः सूर्यः प्राच्यां गंतुर्लालाटिकः एवं भृगुसुतो लाभव्यये आग्नेय्यां कर्मस्थो भूसुतो दक्षिणस्यां तमो नवाष्टमगृहे नैर्
ऋत्याम् सौरिः सप्तमे पश्चिमायां चंद्रः शत्रुगृहात्मजे वायव्यां बुधः पातालगः उत्तरस्यां गीष्पतिर्वित्तभ्रातृगृहे ईशान्यां गंतुर्लालाटिक इत्यर्थः कश्यपेनतु स्
यराशिवशेन लालाटिका उक्तास्तेयथा दिनेशाधिष्ठितो राशिर्यदा लग्नगतस्तदा यातुर्मृत्युप्रदः प्राच्यां दिशि सूर्यो ललाटगः सूर्यस्य राशितस्तस्माद्द्वादशे ल
ग्नगे गृहे एकादशे वा आग्नेय्यां दिशि शुक्रो ललाटगः ललाटगः कुजो याम्ये दशमे लग्नगे गृहे लग्नगे नवमे राशावष्टमे वापि नैर्ऋते ललाटगः सैंहिके
यो यातुर्द्वीक्ष्णनिधनप्रदः लग्नगे सप्तमे राशौ शनिः प्रत्यक्ललाटगः षष्ठराशौ लग्नगते पंचमे वापि चांद्रमाः ललाटगो वायुदिशि यातुर्मृत्युप्रदस्तदा चतु

**प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः कर्मस्थोऽथ तमो नवाष्टमगृहे सौरिस्तथा सप्तमे चंद्रः शत्रुगृहात्मजेपि च**
**बुधः पातालगो गीष्पतिर्वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः स्युः क्रमात् ॥ ५१ मृगे गत्वा शिवे स्थित्वादितौ गच्छन्जयेद्रि**
**पून् मैत्रे प्रस्थाय शाक्रे हि स्थित्वा मूले व्रजंस्तथा ५२ प्रस्थाय हस्ते निलतस्त्वधिष्ण्ये स्थित्वा जयार्थी प्रवसेद्द्विदैवे ॥ ५३ ॥**

र्थराशौ लग्नस्थे बुधः सौम्ये ललाटगः राशौ तृतीये लग्नस्थे द्वितीये चंद्रपूजितः ललाटगश्चंद्रमौले दिशि यातुर्विनाशद इति अत्र ललाटव्यतिरिक्ते कंटक
स्थाने यदि दिगधीशस्तिष्ठति तदा यात्रा शुभाऽन्य यवनाचार्यमतेनेति त्वम् ५१ अथ पर्युषितयात्रायोगचतुष्टयमनुष्टुभेंद्रवज्रयाचाह मृगेति प्रस्थायेति गृ
हस्य पूहा यातव्या दिगभिमुखं कस्यचिद्दृष्टस्य गृहे गत्वा प्रस्थाय आर्द्रायां तस्मिन्नेव गृहे स्थित्वे षित्वा दितौ पुनर्वसौ गच्छन् तद्गृहं त्यक्त्वा ग्रामाद्बहिरेव गच्छ
न् रिपून् शत्रून् जयेत् अयमेको योगः एवमेवानुराधायां प्रस्थाय शाक्रे ज्येष्ठायां स्थित्वा मूले व्रजन् तथा जयेदित्यर्थः अयं द्वितीयो योगः ५२ तथा हस्ते प्रस्था
यानिलतस्त्वधिष्ण्ये स्वाती चित्रे स्थित्वा द्विदैवे विशाखायां जयार्थी भूपादिः प्रवसेद्देशांतरं गच्छेत् अयं तृतीयः ॥ छ ॥ छ ॥ २ ॥ २ ॥

वसंतपुष्येषु निजसीम्नि स्वनगरप्रांते प्रस्थितः सन् यद्येकरात्रोषितः स्यात्तदाऽवनीशो राजा क्ष्मां भूमिं शत्रोरिति शेषः लभते जयेन प्राप्नोतीत्यर्थः अयं चतु
र्थो योगः ५३ अथ समयबलमनुष्टुभाह उषःकाल इति सन्शब्दः स्मरणचतुष्टयेपि संबध्यते उषःकालः पूर्वां विना यानेयात्रायां सन् एवं सर्वत्र व्या
ख्येयं तु दिग्विशेषसमयविशेषप्रशस्तोभिहितः यथा पूर्वाह्ने तूत्तरां गच्छेन्मध्याह्ने पूर्वतो व्रजेत् अपराह्णे व्रजेद्याम्यामर्धरात्रे तु पश्चिमामिति ५४ अ
थ लग्नादिभावानां संज्ञा अनुष्टुभाह लग्नात् भावा इति तन्मनः स्वांतं तम्मानसं मन इत्यभिधानात् आगमः प्राप्तिः अन्यत्स्पष्टं एवंविधसंज्ञाकथनप्रयो
जनं तु क्रूरसाहित्ये तत्तद्भावानां पीडा शुभग्रहसाहित्ये तत्तद्भावानां शुभमित्यर्थः ५५ शालिन्या विशेषफलमाह केंद्रे कोण इति शुभग्रहाः यदि केंद्रे को

**वसंतपुष्ये निजसीम्नि चैकरात्रोषितः स्यात् लभतेवनीशः ५३ उषःकालो विना पूर्वां गोधूलिः पश्चिमां विना विनोत्तरां नि**
**शीथः सन् याने याम्यां विना भिजित् ५४ लग्नाद्भावाः क्रमाद्देहं १ कोशः २ धानुष्क ३ वाहनं ४ मंत्रो ५ रि ६ मार्ग ७ आयुश्च ८**
**हृत् ९ व्यापारा १० गम ११ व्यया १२ ५५ केंद्रे कोणे सौम्यखेटाः शुभास्युः पापास्त्र्यायषट्खेषु चंद्रः नेष्टो लग्नांत्यारिरं**
**ध्रे शनिः खे स्तेत्शुक्रोलग्नेट् नगान्त्यारिरंध्रे ५६ योगात् सिद्धिर्धरणिपतीनामृक्षगुणैरपि भूदेवानाम् ॥ ९९ ॥ २ ॥**

णे १।४।७।१०।९।५ स्युस्तदा यानेषु शुभफलदाः स्युः पापास्त्र्यायषट्खेषु ३।११।६।१० शुभफलदाः स्युः चंद्रो लग्नांत्यारिरंध्रे १।१२।६।८ नेष्टः अशु
भफलदः शनिः खे दशमे नेष्टः शुक्रोस्ते सप्तमे नेष्टः लग्नेडिति लग्नेट् यात्रालग्नस्वामी नगांत्यारिरंध्रे सप्तमद्वादशषष्ठाष्टमेषु चेत्तदा नेष्टः अशुभफ
लद इत्यर्थः गुरुः लग्नपो मृत्युदो याने रंध्रास्तारिव्ययोपगः केप्यातु भयदो धर्मे शेषस्थाने शुभावह इति ५६ अथ योगयात्राध्यायस्यांते तदारंभप्रयोजनं प
र्शार्दूलेनाह योगादिति धरणिपतीनां राज्ञां योगाद्वक्ष्यमाणयोगयात्रालग्नवशाद्दृष्टिपि तिथ्यादौ सिद्धिर्वांछितकार्यनिष्पत्तिः स्यात् भूदेवानां ब्राह्मणानां
ऋक्षगुणैर्नक्षत्रगुणैश्चंद्रबलताराबलविहितनक्षत्रादिभिः सिद्धिर्भवति अपिशब्दात् संचागशकुनादिधनावश्यकता चौराणां वक्ष्यमाणैः शुभसूचकशकुनैः

सिद्धिर्भवति एतद्भिन्नानांमनुजानांमुहूर्त्तात् गिरिशभुजगमित्राद् तिविहिननक्षत्रस्वामिकमुहूर्त्तात्सिद्धिर्भवति ५७ अथयोगयात्रालग्नंमंजुभाषिण्याह स
हजेरविरिति रविःसहजेतृतीयःस्यात् शशीचंद्रोदशमभेदशमस्थाने शनिमंगलोरिपुगृहेषष्ठस्थानेस्यातांसितःशुक्रोपंचमे बुधोहिबुकेचतुर्थे गुरुरपि
लग्नगंश्चेत्स्यात् एवंविधेयोगेराजाप्रचलितः अचिरात्स्वल्पकालेनैवारीन्जयतिवशीकरोतीत्यर्थः ५८ अथयोगांतरमाथयाह भ्रातरिसौरिरिति॥
भ्रातरितृतीयेशनिःवैरिणिषष्ठेभूमिसुतोमंगलः अर्केआयगतेएकादशे एवंविधेयोगेराजाशत्रुजयोभवेत् चेद्दैत्यगुरुःशुक्रोऽनुकूलःयातव्यदिक्पृष्ठ

चोराणामपिशकुनैरुक्ताभवतिमुहूर्त्तादपिमनुजानां ५७ सहजेरविर्दशमभेशशीतथाशनिमंगलोरिपुगृहेसितःसुतेहि
बुकेबुधोगुरुरपीहलग्नगःसजयस्सरीन्प्रचलितोऽचिरान्नृपः ५८ भ्रातरिसौरिर्भूमिसुतोवैरिणिलग्नेदेवगुरुःआय
गतेर्केशत्रुजयश्चेदनुकूलोदैत्यगुरुः ५९ तनौजीवइन्दुर्मृतौवैरिगोऽर्कःप्रयातोमहीद्राजयत्येवशत्रून् ६० लग्नतःस्या
द्देवपुरोधाःलाभधनस्थैःशेषनभोगैः ६१ द्यूनेचंद्रेसमुदयगेर्केजीवशुक्रेविदिधनेसंस्थे ईदृग्योगेचलतिनरेशोजेता
शत्रून्गरुडइवाहीन् ६२ वित्तगतःशशिपुत्रात्रिवासरनाथः॥

५९ र्त्तीभवति ५९ अन्ययोगांतरेगाथयाह तनौजीवइति स्पष्टा
र्थः तथाचनारदः जीवार्कचंद्रालग्नारिरंध्रगायदिगच्छतः तस्यापिसवलमैत्रीचनस्थिराविपुवाहिनीति ६ अथान्ययोगंपंक्त्याह लग्नगतइति लग्ने
गुरुःस्यात् अन्येग्रहालाभधनस्थाःएकादशद्वितीयस्थाश्चेदेवंविधेयोगेराज्ञोविजयः ६१ अन्ययोगंमत्तमाह द्यूनेइति चंद्रेसप्तमस्थेसति अ
र्केसमुदयगेलग्नगेसति जीवशुक्रे विद्बुधेएतेषुत्रिषुधनुसंस्थेषुसत्सु एवंविधेयोगेनरेशश्चेत् चलतितदाशत्रून्जेताजेष्यति कःकानिवगरुडो
हीन्सर्पान् यथाजयति ६२ अथान्ययोगंचित्रपदयाह वित्तगतइति बुधोद्वितीये वासरनाथःसूर्यस्तृतीये शुक्रेलग्नेएवंविधेयोगेचेद्राजाचलतितर्हि

शलभाइवस्युः यथा शलभाअग्नौस्वयमेवगत्वापतंति तथाशत्रवोऽपिगंवराजभ्रतापानलेपतिष्यंतीत्यर्थः ६३ अथान्यंयोगमाथयाह उदयेरविरिति
उदयेरविःशनिःषष्ठःचन्द्रोदशमःस्यात् एवंविधेयोगेवसुधापतीराजायदियातितदारिपुवाहिनीशत्रुसेनावशामिति ६४ अथान्ययोगद्वयंजलोद्धतगत्या
ह तनौशनिकुजाविति इतिआरभ्यवसुधापतिर्यदियातिरिपुर्वाहिनीवशमे तौस्युनराईसहजेकुजेइत्येतत्सर्यन्तमनुवर्त्तते तेनयत्रनिर्दिशोनास्तितत्रजि
गमिषोराज्ञोविजयःस्यादितिवाक्यार्थोज्ञेयःतनौलग्नस्थौशनिमंगलौस्यातां रविर्दशमेबुधोलाभदशमेस्याद् भृगुसुतोवालाभेदशमेवास्यात् एवंविधे
योग च चलितस्यराज्ञोयमेकोयोगः अथद्वितीयःत्रिलाभरिपुभेषु ३।११।६ एषन्यतमस्थानस्थितौभृगुसुतशनीस्यातां यस्मिन्कस्मिंश्चित्स्थानेगुरुज्ञ

लग्नगतेभृगुपुत्रेस्युःशलभाइवसर्वे ६३ उदयेरविर्यदिसौरिरारिताःशशीदशमेपि वसुधापतिर्यदियातिरिपुवाहिनीवश
मेति ६४ तनौशनिकुजौरविर्दशमभेबुधोभृगुसुतोपिलाभेदशमे त्रिलाभरिपुभेषुसुतशनीगुरुज्ञभृगुजास्तथाबलयु
ताः ६५ समुदयगेविबुधगुरौमदनगतेहिमकिरणे हिबुकगतौबुधभृगुजौसहजगताःखलखचराः ६६ त्रिदशगुरुस्तनुगो
मदनेहिमकरणोरविरायगतः सितशशिजावपिकर्मगतौरविसुतभूमिसुतौसहजे ६७॥ ॥भृगुजाबलयुताःस्युस्तदा ए

वंविधेयोगेतथाराज्ञोविजयइत्यर्थः ६५ अथान्यंयोगंत्वरितगतिश्चनजनमैरित्यनेनछंदसाह समुदयगेइति समुदयगेलग्नस्थेबृहस्प
तौसति हिमकरणेचंद्रेमदनगतेसप्तमस्थेसति चतुर्थस्थौबुधशुक्रौस्यातां खलखचराःपापग्रहाः सहजगताःतृतीयगाःस्युः एवंविधेयोगेवसु
धापतिर्यदियातिरिपुवाहिनीवशमेति ६६ अथान्यंयोगंसमुखव्यानजलजगैर्गर्हितास्करवातिलक्षणलसितयाह त्रिदशगुरुरिति बृहस्पतिर्लग्ने
चंद्रःसप्तमेशुक्रबुधौदशमे सूर्यएकादशेशनिमंगलौसहजगताःतृतीये एवंविधेयोगेगंतुराज्ञोविजयएव ६७॥ ६७॥ ६७॥

अथान्यंयोगंस्यादनुकूलाभतनगगश्चेतिलक्षणलक्षितयानुकूलयाह देवगुराविति गुरौचंद्रेवालग्नेरातिसूर्येषष्ठेबुधःपंचमस्थानेशनिर्दशमशुक्रश्च
तुर्येस्यात् एवंविधेयोगेजिगमिषोराज्ञोविजयएव ६८ अथान्यंयोगंननरघटितानुमंदाकिनीतिलक्षणलक्षितयामंदाकिन्याहहिमकिरणइति बु
धोबलीचेन्नोलग्नेस्यात् हीतिनिश्चयेनवृहस्पतिश्चकेंद्रगतः यदिनिर्बलिनीचाशुभाधिकारश्चातोबलरहितः सन्द्वादशतृतीयषष्ठनवमाना
मन्यतमस्थानस्थश्चंद्रस्तथैवंविधयोगेगंतुराज्ञोविजयएव ६९ अथान्यंयोगंअभिनवतामरसनजजायदृविलक्षणलक्षितेनाभिनवतामरसच्छंदसा
ह अशुभस्वगैरिति अशुभग्रहैः अनवाष्टमदनस्थैः नवमाष्टमसप्तमस्थानव्यतिरिक्तस्थानस्थैः कविःशुक्रःचतुर्थतृतीयैकादशस्थानस्थःकेंद्रग

देवगुरौवाशशिनितनुस्थेवासरनाथेरिपुभवनस्थे पंचमगेहेहिमकरपुत्रःकर्मणिसौरिःसुतदिसितश्च ६८ हिमकिरणक
तोबलीचेतनौत्रिदशपतिगुरुर्हिकेंद्रस्थितः व्ययगृहजारिधर्मसुस्थितोपरिभवतिनिर्बलश्चंद्रमाः ६९ अशुभस्वगैरनवा
ष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थः कविरिहकेंद्रगगीष्पतिदृष्टोवसुचयलाभकरःस्वलुयोगः ७० रिपुलग्नकर्म
हिबुकेशशिजेपरिवीक्षितेशुभनभोगमनैः व्ययलग्नमन्मथगृहेषुजयःपरिवर्जितेषशुभनामधरैः ७१ लग्नेयदि
जीवःपापायेदिलाभेकर्मण्यपिचेद्राज्याधिगमःस्यात्॥

तोगीष्पतिर्गुरुस्तेनदृष्टः एवंविधेयोगेवसुचयोद्रव्यसमूहस्तस्यला
भकरःस्यात् ७० अथान्यंयोगंयात्रालग्नंप्रमिताक्षरासजससैरुदितेतिलक्षणलक्षितयाप्रमिताक्षराछंदसाह रिपुलग्नेति षष्ठलग्नदशमचतुर्था
नामन्यतमस्थानस्थेबुधेशुभनभोगमनैः शुभग्रहैः परिवीक्षितेदृष्टेसतिव्ययद्वादशलग्नसप्तमस्थानव्यतिरिक्तस्थानस्थितैरशुभनामधरैःपापग्रहैरु
पलक्षितेसतिएवंविधेयोगेजिगमिषोराज्ञोविजयएव ७१ अथान्यंयोगद्वयंसौसेमणिमालाछिन्नागुहवक्त्रैरितिलक्षणलक्षितयाह लग्नेइति।
लग्नेगुरुःपापग्रहायेदिलाभेएकादशेकर्मण्यपिदशमेपिचेत्स्युःएवंविधयोगेप्रचलितस्यराज्ञोराज्याधिगमःराज्यप्राप्तिःस्यात् अथवाद्यूनेसप्तमे

बुधशुक्रौस्यातांचंद्रोहि ॥ ७२ ॥ चतुर्थेस्यादेवंविधयोगेसर्वैर्मुनिवर्यैस्तद्दृढफलमुक्तंराज्याधिगमःस्यात् ७२ अथान्ययोगत्रयंननततगुरुभिश्चंद्रिकाश्चतु
भिरितिलक्षणलक्षितेनचंद्रिकाछंदसाह रिपुरिति अत्रस्थानाग्रहाणांचक्रमाप्यायथासंख्यमन्वयः यथा रिपौषष्ठेशुक्रः लग्नेजीवः अष्टमेचंद्रः एवंवि
धेयोगेगंतूराज्ञोविजयएव अयमेकोयोगः अथद्वितीयःबुधभृगुजौतुर्यगेहस्थितौवतुर्थस्थानस्थौस्यातां चंद्रमामदनभवनगः सप्तमस्थानस्थःएवंवि
विधेयोगेगंतूराज्ञोविजयएव अथतृतीयोयोगः वाचंद्रमाअंबुगः चतुर्थगः शशिसुतभृगुजयोरंतर्गतत्वंएकराशावेवज्ञेयं अन्यथाचतुर्थस्थानस्थचंद्रस्य
बुधशुक्रयुतदुरधरायोगमेघावसत् ७३ अथान्ययोगद्वयंसजससगोवकथितःकलहंसइतिलक्षणलक्षितेनकलहंसछंदसाह सितेति लग्नेशुक्रः

द्यूनेबुधशुक्रौचंद्रोहिबुकेवातद्दृढफलमुक्तंसर्वैर्मुनिवर्यैः ७२ रिपुतनुनिधनेशुक्रजीवेंदवोत्यथबुधभृगुजौतुर्यगेहस्थितौ
मदनभवनगश्चंद्रमावांबुगःशशिसुतभृगुजांतर्गतश्चंद्रमाः ७३ सितजीवभौमबुधभानुतनूजास्तनुमन्मथारिहिबुकत्रि
गृहेचेत् क्रमतोरिसोदरवशात्रवहोराहिबुकायगैर्गुरुदिनेस्वलखेटैः ७४ सहजेकुजोनिधनगश्चभार्गवोमदनेबुधोर
विरीतनौगुरुः अथचेत्सुरीज्यसितभानवोजलत्रिगताहिसौरिरुधिरौरिपुस्थितौ ७५ ॥ ९ सप्तमेजीवःषष्ठेभौमः चतुर्थेबुधःतृ

तीयेशनिः एवंविधेयोगेगंतूराज्ञोविजयएव एकोयोगः अथान्यः गुरुदिनेबृहस्पतिवारे अखिलखेटैः समस्तग्रहैः सूर्यादिभिः क्रमतोरिसोदरेत्यादि
स्थानस्थितैर्यथा षष्ठेर्कः तृतीयेचंद्रः दशमेभौमः षष्ठेबुधःलग्नेगुरुः चतुर्थेशुक्रः एकादशेशनिः एवंविधेयोगेपिगंतूराज्ञोविजयएव ७४ अथान्ययो
गद्वयंसजसजसेनगौचकथिताप्रबोधितेतिलक्षणलक्षितप्रबोधिकाछंदसाह सहजेइति तृतीयेभौमः अष्टमेशुक्रः सप्तमेबुधःषष्ठेसूर्यःलग्नेगुरुः एवंवि
धेयोगेगंतूराज्ञोविजयएव अयमेकोयोगः अथान्यः अथेति ईज्यसितभानवोगुरुशुक्रसूर्याःजलत्रिगताःचतुर्थतृतीयस्थानस्थाःसौरिरुधिरौशनिमंग
लौषष्ठेस्थितौ एवंविधेयोगेहिनिश्चितंराज्ञोजयःस्यात् ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥

उच्चसंस्थेत्रगतश्चंद्रोत्यसौम्यखचरविर्गुरुः संजीवनसमाख्योयंमृत्युयोगापहारकः १२ एकर्क्षगौजीवशुक्रौस्यातामन्योन्यसप्तगौ भयंकराख्ययोगोयंयातु
र्भीतिप्रदःस्मृतः १३ उच्चमूलत्रिकोणेषुवर्त्ततेगुरुभार्गवौ अभयाभिधयोगोयंभयंकरविनाशनः १४ भूर्येशोव्ययगोनीचःपुत्रस्थानेशनैश्चरः
विदारिकसमाख्योयंयातुःपत्नीनिहंत्यसौ १५ मार्गेशःशनिसंयुक्तःसप्तमेस्तंगतोग्रहः विदारिकमिमंमन्यायातुःपत्नीविनाशकं १६ सप्तमेलग्नपे
स्तस्मात्तुत्रिषुपंचस्वखेचराः कुटुंबहारकोयोगोयातुःत्रियतमोहरेत् १७ दुर्बलोयदिमार्गेशोनिवसेत्पापमध्यगः पापकुंजरयोगोयंयातुःपत्नींनिहंत्यसौ १८ कु
मार्गेशात्सप्तमेभानुःपंचमेक्रूरखेचरः विदारिकाख्यएवासौभार्यामरिवशंनयेत् १९ स्वोच्चमूलत्रिकोणस्थःसौम्यःपापविवर्जितः आनंदार्णवयोगोयंप्रे
मणिवृजत्यावहः २० रत्नावल्याउदयारिनभस्तलगेदिनकृद्यमशीतकरैः नमबंत्यस्याभिमुखाहरिण्याइवकेसरिणः २१ दैवज्ञवल्लभे ज्ञेसितनसहितेस्त
गेविधौवधुगेत्रवसन्नामहीभुजा संगरेरिपुगणोविकीर्यतेमूलराशिरिवमातरिश्वना २२ मूर्त्तिवित्तसहजेषुसंस्थिताःशुक्रचंद्रसुततिग्मरश्मयः यस्य
यानसमयेरणांगणेतस्ययातिशलभाइवारयः २३ यात्राशिरोमणौ योयातिजीवेतनुगेमहीशःक्रूरस्थितैर्व्योमसुखार्थवायसंस्थैः तस्याग्रतःसंपतिवैरि
सेनाश्रीतिर्भूपाणामिवनास्थिरास्यात् २४ राजमार्त्तंडः लाभारिदुश्चिक्यगतौयमारौ रवीज्ञान्वितभार्गववाक्पतिस्थौ यस्यप्रयाणेविलयंप्रयातितस्यद्वि
षःसर्वरसंयथाम्भः २५ फलप्रदीपे लाभविक्रमसुखस्थितेकवौ कंटकस्यगुरुणानिरीक्षिते पूर्णगर्भभववर्जितैःखलैःस्याज्जितत्रिभुवनोद्विभा
नृपः २६ सौम्यग्रहैःकेन्द्रतपःसुतस्थैःक्रूरैस्त्रिलाभारिगतैर्गतायै कोपानलःशांतिमुपैतितेषांविरोधिनारीनयनांबुपातैः २७ वराहः एकोपि
जीवार्ककुजार्कजानांस्वोच्चेविलग्नेस्वगृहेयदीन्दुः यातस्ययात्यत्रपराङ्गणाशंमहाकुलानीवकुटुंबभेदैः २८ चंद्रेस्तगेदेवगुरौविलग्नेज्ञशुक्रयोः
कर्मणिलाभभेर्के सौरारयोर्भ्रातृभयोश्चयातौनृपःस्वमृत्यानिवशास्तिशत्रून् २९ नारदः स्वोच्चस्थेलग्नगेजीवेवित्रमृत्याप्यगतेयदि गताराजारिपून्हंतिपि
नाकीत्रिपुरंयथा ३० शुक्रेत्रिकोणकेंद्रस्थेलग्नेचंद्रेथवारवौ शत्रून्हंतिगतोराजाब्रह्मद्वेषःकुलंयथा ३१ पापास्तृतीयेहिबुकेसितज्ञौजीवोविलग्ने
मृगलांछनोपिप्रयातस्यबलंरिपूणांकृतघ्नतायामिवयातिनाशम् ३३ यस्योदयास्तारिचतुष्कसंस्थाःशुक्रोंगिरांगारकसौम्यसौराः द्विषद्बलंस्त्रीवदना

शकुनलग्नादीन्यनिंद्यानि चेतोविशुद्धिश्चमास्त्येवात्रकस्यप्राबल्यमित्याह अथेति शकुनादितोपिसकाशात् चेतोविशुद्धिरधिका तांचेतोविशुद्धिंविनाने याति नगच्छेत् कस्मात् निमित्तशकुनादिभ्यःप्रधानंहिमनोजयः तस्माधियात्सतांनृणांप्रधानंहिमनोजयइति ७८ अथयात्रायामवश्यंनिषिद्धनिमित्तानिव संतमालिका छंदसाह तल्लक्षणंविषमेससजगौ समेचेत् सभरयश्चवसंतमालिकासाविषमसमचरणे व्रतबंधनेति व्रतबन्धनंयज्ञोपवीतम् देवप्रतिष्ठा सिद्धाकरपीडाविवाहः उत्सवाहोलिकादि सूतकान्तेमरणसूतकंच एषांप्राप्तौ यावद्दिनसमाप्यानामसमाप्तौसमाप्तिंविनाकदापिनैवचलेत् गच्छेत् नारदः उच्चवोपनयोद्वाहप्रतिष्ठाशौचसूतके आसमाप्तेनकुर्वीतयात्रांतत्रजिजीविषुरिति अकालेतिविद्युत्प्रसिद्धा घनोमेघवर्जितं वर्षोवृष्टिः तुहिनंनीहारः

सिद्धिर्भवेदथपुनःशकुनादितोपिचेतोविशुद्धिरधिकानचतांविनेयात् ७८ व्रतबन्धनदेवतप्रतिष्ठाकरपीडोत्सवसूतकास मासौनकदापिचलेदकालविद्युतघनवर्षतुहिनेपिसप्तरात्रम् ७९ महीपतेरेकदिनेपुरात्पुरेयदाभवेतांगमनप्रवेशकौ भवारशूलप्रतिशुक्रयोगिनीविचारयेन्नैवकदापिपंडितः ८० यद्येकस्मिन्दिवसेमहीपतेर्निर्गमप्रवेशौस्तः तर्हिविचार्यः स्वधियाप्रवेशकालोनयात्रिकस्तत्र ८१ प्रवेशान्निर्गमंतस्मात्प्रवेशंनवमेतिथौ॥ ॥ ॥ ॥ ॥

एषुप्रदर्शितेष्वेवकालेषुसत्सुसप्तरात्रंदिनसप्तकंनचलेत् नारदः अकालजेषुनृपतिर्विद्युद्गर्जितवृष्टिषु उत्पातेषुत्रिविधेषुसप्तरात्रंनतुव्रजेदिति ७९ अ थैकदिनमध्येगमनप्रवेशविशेषंवंशस्थवृत्तेनाह महीपतेरितिस्पष्टार्थः यथावाराणसीस्थानाच्चरणादिनगरे प्रवेशः तत्रैतान्दोषान्पंडितोनैवविचारयेत् ८० अथैकदिनमध्येनिर्गमप्रवेशास्यरूपेकार्येविचिकीर्षितेकिंविचार्यमित्यार्ययाह यद्येकस्मिन्नितिस्पष्टार्थम् ८१ अथप्रयाणेनवमीनिषेधमनुष्टु माह प्रवेशादिति गृहप्रवेशतिथितोनवमेतिथौनिर्गमंनकुर्यात् पुनश्चगमनदिवसात् नवमेतिथौगृहप्रवेशनंकुर्यात् एवंनक्षत्रेचगमननक्षत्रान्नवमे नक्षत्रेगृहप्रवेशम् तथागृहप्रवेशनक्षत्रात्।

नवमनक्षत्रे गमनं च न कुर्यात् वारेष्व गमनवारान्नवमवारे गृहप्रवेशम् गृहप्रवेशवासरान्नवमवारे गमनं न च कुर्यात् गर्गः प्रवेशान्निर्गमश्चैव नि
र्गमाच्च प्रवेशनम् नवमे यातु नो कुर्यात् द्विरस्थ्यवारे तिथावपीति ८२ अथ यात्रादिनीयं विधिं शालिन्याह अग्निं हुत्वेति स्पष्टार्थम् ८३ अथ नक्षत्रदोहदानुशा
र्दूलविक्रीडितेनाह कुल्माषानिति अत्र चतुर्थचरणे प्रियंगवपूपेत्यत्र छंदोभंगोस्ति सगणप्रक्षेपाकरणात् रूलंपे हेवेति पिंगलसूत्रेण नकारेरफसं
योगे पूर्ववर्णस्य लघुत्वाभिधानात् सगण एव तथा च कालिदासः गृहीतप्रत्युद्गमनीयवस्त्रेति ह्यादि से अश्विन्यादिसप्तविंशतिऋक्षु कुल्माषा
दिकं नक्षत्रदोहदम् इदं भक्ष्याभक्ष्यवर्णभेदेन देशभेदेन विचार्यम् भक्ष्यसंभवे भक्षयेत् अभक्ष्यसंभवे अवलोकयेत् पश्येत्स्पृशेद्वेति ध्येयम् यथा अश्वि

नक्षत्रे च तथा वारे नैव कुर्यात्कदाचन ८२ अग्निं हुत्वा देवतं पूजयित्वा नत्वा विप्रानर्चयित्वा दिगीशान् दत्वा दानं ब्राह्मणेभ्यो
दिगीशं ध्यात्वा चित्ते भूमिपालो धिगच्छेत् ८३ कुल्माषांस्तिलतंडुलानपि तथा माषांश्च गव्यं दधित्वाज्यं दुग्धमथैणमांसमप
रं तस्यैव रक्तं तथा तद्वत्पायसमेव चाषपललं मार्गं च शाशं तथा षाष्टिक्यं च प्रियंगवपूपमथवा चित्रांडजान्सत्फलं ८४ कौर्मं
सारिकगौधिकं च पललं शाल्यं हविष्यं हयाद्भक्ष्यात्कृसरान्नमुद्गमपि वा पिष्टं यवानां तथा॥ ७ ॥ ७ ॥ २।

न्यां कुल्माषान् स्वातौ भिन्नमाषान् भरण्यां तिलमिश्रतंडुलान् कृत्तिकायां माषान् रोहिण्यां गव्यं गोरसं च विदे दधि मृगे गव्यमाज्यं घृतं आर्द्रायां दुग्धं गव्यमे
व पुनर्वसौ ऐणमांसं हरिणमांसं पुष्ये मृगस्य रक्तं आश्लेषायां पायसं मघायाम् चाषस्य पललं मांसं पूर्वफल्गुन्यां मृगस्येदं मार्गं मांसम् उत्तरफल्गुन्यां शा
सेदं शशमांसम् हस्ते षाष्टिक्यं षष्टिकान्नं चित्रायां प्रियंगुः फलिनी एके स्वातौ अपूपं विशाखायां चित्रान् नानावर्णान् अंडजान् पक्षिणः अनुराधायां सत्फलम्।
उत्तमफलमन्नादिकम् ८४ ज्येष्ठादिदोहदं शार्दूलविक्रीडितेनाह कौर्ममिति ज्येष्ठायां कूर्मस्य कच्छपस्येदं कौर्मं मांसम् मूले सारिकायाः पक्षिण्याः इदं सारि
कं मांसं पूर्वाषाढायां गोधायाः इदं गौधिकं मांसम्॥ ७ ॥ ७ ॥ ७ ॥ २ ॥ ७ ॥ २ ॥

उत्तराषाढायांशल्यंपरिसिद्धं द्रंशाल्यंमांसम् श्वावित्तुशल्यंइत्यमरः अभिजितिहविष्यंमुद्गादि श्रवणेकृसरान्नं खिचडिका धनिष्ठायांमुद्गान्नंमुद्गौद
नं शतभेयवानांयवपिष्टम् पूर्वाभाद्रपदायांमत्स्यान्नमत्स्यमिश्रितमोदनम् उत्तराभाद्रपदायां चित्रान्नवर्णमोदनम् रेवत्यांदध्यन्नंदधिभक्तमिति नारदः
कुल्माषाश्चतिलाश्चमाषान्दधिमध्यघृतंपयः मृगमांसंचतत्सारंपायसंचषष्टिकंमृगं शशमांसंचषाष्टिकंप्रियंगुकमपूपकम् चित्राण्डजान्फलंकूर्मसारीगोधा
वशल्यकम् हविष्यंकृसरान्नंचमुद्गान्नंयवपिष्टकं मत्स्यान्नंचित्रितान्नंचदध्यन्नंदस्रभात्क्रमादितिगुरुः अलभ्यालभ्यभक्ष्या वात्सल्यस्पर्शात्तत्तान्व्रजे
त् रसाःसिद्धिवमाप्नोतिइष्टमादिशुभूपतिः दोहदेषुप्रयातेषिद्दलत्रविकल्पोज्ञेयः ८५ अथदिग्दोहदमनुष्टुभाह आज्यमिति आज्यंघृतपूर्वस्याम्

मत्स्यान्नंखलुचित्रितान्नमथवादध्यान्नमेवंक्रमाद्भक्ष्याभक्ष्यमिदंविचार्यमतिमान्भक्ष्येत्तथालोकयेत् ८५ आज्यं
तिलोदनंमत्स्यंपयश्चापिपथाक्रमम् भक्षयेद्दोहदंदिश्यमाशांपूर्वादिकांव्रजेत् ८६ रसालंपायसंकांजीशृतंदुग्धंत
थादधि पयोश्रृतंतिलान्नंचभक्षयेद्वारदोहदम् ८७ पस्मादितोर्कदलतंडुलवारिसर्पिः श्राणाहविष्यमपिहेमजलंच

तिलमिश्रमोदनंदासिणस्यांमत्स्यंपश्चिमायांपयोदुग्धमुत्तरस्यांदिशिभवंदिश्यंएतद्दोहदंभक्षयेत् ततः पूर्वाद्यामाशांव्रजेत् ८६ ॥ अपूपम्
वारदोहदमनुष्टुभाह रसालामिति रसालाशर्करादधिमरीचकर्पूरैलासंस्पृष्टालोके शिखरिणीतिप्रसिद्धातोरविवारेपायसंसोमेकांजीत्र क्वाथितांम्भो
मेश्रितंचद्वेदुग्धंबुधेदधिगुरौ अश्रितअपक्वदुग्धंशुक्रे तिलमिश्रमोदनंशनिवारे एतद्वारदोहदंरविवारादिक्रमेणभक्षयेत् स्यात्रसालातुमा
र्जितास्यमरः ८७ अथतिथिदोहदंवसंततिलकेनाह पस्मादितइति पस्मादितः प्रतिपदमारभ्यपंचदशतिथिषुक्रमेणतिथिदोहदंभुक्त्वाव्रजेत् यथा
प्रतिपदिअर्कस्यप्रसिद्धस्यदलानिपर्णानि द्वितीयायांतंडुलवारिप्रक्षालितंतंडुलजलम् तृतीयायांसर्पिर्घृतम् चतुर्थ्यांश्राणायवागूःपंचम्यांहविष्यंमु

प्रस्थानं प्रतुर्ययेत एतान्यत्र शनद्वयं स्वदेवसदनाद्धापि दशभिप्रस्थितो हतवद्गनिवसिष्ठोक्तेः गंतव्यदिक्ष्विति तदपि प्रस्थानं प्रयतेन सावधानेन राज्ञां गत
व्यदिक्प्रस्थाने विग्रमनं विकीर्णतत दिगभिमुखं कार्यम् गंतव्यदेशाभिमुख्येन देशे प्रस्थानमाहुः श्रीमदं नराणामिति राजमार्तंडोक्तेः १४ अथान्यद
पि लौ परे पुह प्रस्थाने भूमिपाल इति भूमिपालो राजा प्रस्थाने दश दिवसमभिव्याप्य दशाहोरात्राणि न वसेत सामंतो मांडलिकाश्चतुर्हारिकः एकत्र प्रस्थानि
सप्तरात्रं न वसेत तदितरमनुजो ब्राह्मणादिस्तथैव एकत्र प्रस्थाने पंचरात्रं न वसेत यदि देवाद्वसेत तदा किं कुर्यादित्यत आह ऊर्ध्वमिति अवधि दिवसान्
क्रमानंतरं पुनर्गृहमागत्य शुभे लग्ने वा कश्चकारेण विचारिते शुभ दिवसे गच्छेत् कं विदिग्विशेषेण प्रस्थाने दिवस नियमो भिहितः राजमार्तंडः प्राच्या
महानिषुनयः प्रवर्तंति सप्तयाम्यां [illegible] मतीव शुभ मदानि दिनानि पंच त्रीण्येव पश्चिमे दिशि शिक्षिति नायकानां प्रस्थानकेषु दिवसद्वयमुत्तरस्यां मिति अथप्र

संप्रस्थितो य इह मंदिरतः प्रयातो गंतव्यदिक्षु न तदपि प्रयतेन कार्य्यम् १४ प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नै
कत्र तिष्ठेत्सामंतः सप्तरात्रं तदितरमनुजः पंचरात्रं तथैव ऊर्ध्वं गच्छेत्सुभाहे प्यथ गमनदिनात्सप्तरात्राणि पूर्वं वाशक्तो
तद्दिने सो रिपुजयमना मैथुनं नैव कुर्यात् १५ ॥ प्रस्थानकर्तुर्नियममाह अथेति अथो राजादिः रिपुविजयमनाः शत्रुजये कृतांतः क
रणो गमनादिनात्पूर्वं सप्तरात्राणि मैथुनं संभोगं नैव कुर्यात् च्यवनः त्रिरात्रं वर्जयेत्क्षीरं पंचाहं क्षुरकर्म च तदहः शाकवृंताणि सप्ताहं मैथुनं त्यजेद् वा अ
थवा अशक्तो सप्ताह मतिक्रामितयास्यातुमशक्तो तद्दिने यात्रादिवसे मैथुनं नैव कुर्यात् गर्गः यात्राकाले तु संप्राप्ते मैथुनं यो निषेवते रोगार्तः क्षीणके
शश्च सन्निवर्तेत वा न वेति कदा तु प्रथमदिने स्त्री ऋतुस्नाता भवति गमने चावश्यकता तत्र निर्णयमाह च्यवनः आत्ययिक कार्ये पतेत् पुष्पस्नाता समा
गमं गत्वा मुहितो गच्छेन्नृलं जते मनोरथान चिरकालेनेति यदा पुनर्गमनार्थं कालांतरमस्ति तद्दिने मैथुनं कृत्वा कालांतरे सल्लग्ने यायादित्यर्थसिद्ध
मू १५॥

अन्यदपिशालिन्याह दुग्धमिति अस्मिन्वासरेयात्रादिनेक्षीरं मधुभक्षणेन तैलंतैललायनंस्नानं वमिश्चर्दैवोद्धृतांशरीरशोधनार्थंबलात्कारस्नं
यात्रादिनेनिषिद्धं ९६ अन्यदपिगीताह भुक्तेति यदितैलपक्वानिवस्तकारीन्यन्नानि गुडमिश्रविकारं सारसलवणं पक्वमांसानियोभुक्त्वागच्छ
तिसराजातिरुग्णोरोगसहितोविनिवर्त्तते गर्गः कटुतैलगुडसारपक्वमांसाशनंतथा भक्षयित्वात्यसौमोहात्व्याधितःसन्निवर्त्ततइतिग्रंसदुग्धादिनि
षिद्धेदोहद्व्यतिरिक्तविषयः स्त्रीद्विजमिति स्त्रीचद्विजश्चतयोःसमाहारः स्त्रीद्विजंअवमान्यधिकशब्दताडनादिनामानभंगंकृत्वागच्छतः पुंसोमरणं
स्यात् गर्गः यस्तुसंप्रस्थितोयात्राभार्यांनैवाभिनंदति भार्यानुगामिनस्तेनसन्ततिनिवर्त्तते परकीयायांवास्त्रियंपुरुषमेवचताडयित्वातुयोमोहात्तदंतं
तस्यजीवितं यात्रायांप्रस्थितोयस्तुब्राह्मणानवमानयेत् नोर्ताम्रतिनिवर्तेतस्तंततस्यजीवितं केचित्तुमाशरूभशब्दान्याभाकालेशरूमोशरूभसूचक

दुग्धंत्याज्यंपूर्वमेवत्रिरात्रंक्षौरंत्याज्यंपंचरात्रंचपूर्वम् क्षौद्रंतैलंवासरेस्मिन्वमिश्चत्याज्यंयत्नाद्भूमिपालेनननं ९६ ॥
भुक्त्वागच्छेलियदिचेत्तैलगुडक्षीरपक्वमांसानि विनिवर्त्ततेसरुग्णः स्त्रीद्विजमवमान्यगच्छतोमरणं ९७ यदिमाःस्रु
चतुर्षुपौषमासादिषुस्युरभ्रंहिंभवेद्गर्भकालवृष्टिः॥ ९८ ॥ [illegible]

दत्रपजीवशब्दाश्चमार्गास्तिष्ठंनिवर्तकगम्यतेमृदंशमतेमोहात्यात्रानेच्छतिबुधाःस्रुतकामितमीनदृक्श्चेति कार्यसंरोमार्त्तध्वज्ञाहंकादृदि
इति अथाकालवृष्ट्यास्ययदोपवर्तनतिलकयाह यदीति पौषमाघफाल्गुनचैत्रेषुचतुर्षुमासेषुयदिवृष्टिर्भवेत्साऽकालवृष्टिः पौषादिचतुरोमासाः श्रा
सावोर्द्धकालजेतिवचनात् तत्राकालवृष्ट्यो जातायांयदिवसुधापृथ्वीयावत् पशवोगवादयः मर्त्यामनुष्यास्तेषांपदैश्चरणैरंकिताचिन्हितानभव
तिनाबदकाद्युपदेशेपिनास्तियादृपशुचरणांकितास्यात्तदादोषोस्त्येव अत्रभाष्याअल्पवृष्टौकर्दमादिवाहुल्यात् अल्पत्वादृष्टिदोषात्यनेमहतीतिवदं
ति नचबहुवृष्ट्यादेनापाकारणात् तत्रासितादौमार्गशीर्षस्यत्रतिपदिवसेतथापूर्वाषाढामतेचंद्रेगर्भाणांधारणंभवेदितिकश्यपोक्तेः॥ [illegible] ॥ [illegible]

मार्गादिमासगर्भग्रहणकालस्तत्रवृष्टिरावश्यकी यदाह वराहः पवनसलिलविद्युत् गर्जिताभ्रान्वितोयः समवतिबहुतोयः पंचरूपस्तुमेघइति ततश्चग
र्भगृहणयोग्यो अल्पावृष्टिनेदोषस्सहती वृष्टिस्तु गर्भगलनं यतोवाराहेणोक्तं गर्भसमयेऽतिवृष्टिर्गर्भाभावायनिमित्तकृतेति निमित्तकृतासात्विकं सावि
त्वर्थिः विद्युतिरूपधीयमानादोषमुपधिनुयात् एतामहावृष्टेरेवदोषवत्वं अतएवमृगशिरसरंतोजलदानशस्ताइतिवृहद्यात्रायामुक्तं तस्मादल्पायामकाल
वृष्टौदोषाभावः अल्पायांतल्पदोषः महत्यांतुमहान्दोषइति सप्तप्रातरात्रिकाइत्युक्तम् प्राकुएकैकैनेकमहः प्रोक्तं द्वितीयेनत्रिरात्रकं तृतीयेनतुपंचाहं दश
रात्रमतःपरम् पौषेतुत्रिदिनंवर्ज्यमाघमासे दिनद्वयं फाल्गुनेदिनमेकंतुचैत्रेतुघटिकाद्वयमितितु आवश्यककार्यविषयम् १० पूर्वोक्तमेवार्थंस्पष्टीकु
र्वन्नावश्यकयात्रायांतच्छांतिकंदुष्टशकुनशांतिकंचातिशक्वर्यामाथाछंदसाह अल्पायामितिस्पष्टार्थः प्रथमचरणम् अतोयत्राच्याः पठंति तावत्रयाणां

पशुमर्त्यपदांकितानयावद्भूसुधास्यान्नहितावदेवदोषः १० अल्पायांवृष्टौदोषोल्पोभूयस्यांदोषोभूयान्जीमूतानांनिर्घोषेवृ
ष्टौवाजातायांभूयः सूर्येन्दोर्बिंबेसौवर्णेकृत्वाविप्रेभ्योदद्यात् दुःशाकुन्येसाज्यंस्वर्णंदत्वागच्छेत्स्वेच्छाभिः ११ विप्रा
श्शुभफलान्नदुग्धदधिगोसिद्धार्थपद्मावस्त्रवेश्यावाद्यमयूरचाषनकुलावध्वेकपश्वामिषम्॥ ७ ॥ २ ॥

दिषुभूपतीनामकालवृष्टिः प्रकरोतिदोषम् यावद्भुवेतंचरतोजनानांतथापशूनांचरणाङ्किताभूरितितन्निर्मूलत्वादुपेक्ष्यम् स्वयंप्रस्थानेसति
मार्गमध्येनास्त्ययंदोषः आवश्यकयात्रायांदानमाह जीमूतानामिति जीमूतानांमेघानांनिर्घोषेशब्देअकालवृष्टौवाजातायांसूर्येन्दोर्यथासंख्या
सौवर्णनिर्मितेबिंबेकृत्वाब्राह्मणेभ्योदद्याततः स्वेच्छयागच्छेत् प्रसंगाद्दुष्टशकुनानांदानमाह दुःशाकुन्येइति शकुनस्यभावःशाकुन्यंदुष्टंचतच्छा
कुन्यंचदुःशाकुन्यंतस्मिन्दुष्टशकुनप्रस्थानकालेसंभूतेसतिसाज्यंसघृतंस्वर्णंविप्रेभ्योदत्वास्वेच्छाभिर्गच्छेत् ११ अथशुभसूचकशकुनान्शार्दूल
विक्रीडितेनाह विप्राश्चेति विप्राबहवोद्वौवानत्वेकः अश्वःप्रसिद्धः॥ २ ॥ २ ॥ २ ॥ २ ॥ २ ॥

इभोहस्तीअनुन्मत्तः फलान्दुग्धदधीनिप्रसिद्धानि गौः धेनुः सिद्धार्थः सर्षपाः पद्मंकमलं अंबरंवस्त्रंस्व छं वेश्यागणिकावाद्यमर्दलादि मयूरश्चाषो
पक्षिणो नकुलः प्रसिद्धः कृष्णैकपशुः रज्ज्वादिनाबद्धोवृषादिः आमिषंमांसं सद्वाक्यकार्यसिद्धिरस्त्वित्यादिकंकुसुमानिचंपकादीनि इक्षुः प्रसिद्धः सक
लः नतुखंडितः जलपूर्णकलशः संमुखः छत्रंप्रसिद्धम् मृत्तिकाकन्याकुमारी रत्नंमाणिक्यादि उष्णीषंशिरोवेष्टनं सितोश्वः श्वेतवृष अयमबद्धोपि मद्यंप्र
सिद्धम् सस्कतस्त्री सपुत्रास्त्री दीप्तोजाज्वल्यमानोग्निरिति १०० अन्यच्छार्दूलविक्रीडितेनाह आदर्शांजनेति आदर्शोदर्पणम् अंजनंकज्जलम् धौ
तवस्त्रउज्वलीकृतवस्त्रोरजकः वस्त्रनिर्णेक्ता मीनोमत्स्यः आज्यंघृतम् सिंहासनंदेवादेः शवमेवशावंमृतकंपृष्ठमामिलोकरोदनरहितम् ध्वजः
पताका मधुक्षौद्रम् छागोमेषः अस्त्रंधनुरादि गोरोचनंप्रसिद्धम् भारद्वाजः पक्षी नृपानस्त्रस्वासनादि वेदनिनादोवेदध्वनिः मांगल्यंप्रसिद्धम् गी

सद्वाक्यंकुसुमेक्षुपूर्णकलशाश्छत्राणिमृत्कन्यकारत्नोष्णीषसितोक्षमद्यसस्कतस्त्रीदीप्तवैश्वानरम् १०० आदर्शांजन
धौतवस्त्ररजकोमीनाज्यसिंहासनंशावंरोदनवर्जितंध्वजमधुच्छागास्त्रगोरोचनम्॥ छ ॥ ॥ छ ॥

तंगानम् अंकुशोहस्तिनिवारणार्थमस्त्रम् एतेषुदार्थागतुर्नृपतेः प्रयाणसमयेसंमुखंदृश्यमानाः सत्फलदाशुभफलदाः तथारिक्तोजलरहितोघटः
कुंभः स्वानुगः स्वस्यपश्चाद्भागगामीसोपिशुभफलदः कश्यपः कोर्थसिद्धिर्भवेदृष्टे शवेरोदनवर्जिते प्रवेशेरोदनयुतः शवः स्यात्तुशिवप्रदा वसंतराजः आ
पतिकेप्राणाब्राह्मणः संमुखाक्षियः बुधशुक्रौचचंद्रस्योभवतायोः बृहस्पते चंद्रः सूर्यश्चभवतिदशमस्थापद्यथवा दीपादर्शौसमनसोः रजकोधौतवा
ससाकृतस्यात्रेयद्रासोम्येवृषोबद्धस्तुसंमुखः चंद्रोगुरुश्चसहजेश्वानोवामांगभागतः सर्वकर्मायनवमेभारद्वाजोथनाकुलः चाषस्यदर्शनंवास्याद्वामांगेस्यं
तद्दुर्लभम् आदित्योराहुसौरीचसहजस्थाकुमारिकाम्॥

पीठानां रूभगानां वा दर्शनं सर्वकामदम् षष्ठे तृतीये कर्मायेभौमश्चेत फलं भवेत् दास्यो वेश्याः क्रूरा मांसलाभश्चैव स निश्चितः सप्ताष्टपंचमेयस्य जीवो नोवानवर्तेते आरश्श्वलाभदः राहुर्भौमश्चमंदश्चलग्नाद्द्वितीयगः उदृतमो मयेपश्येच्छीघ्रं लाभं धनं विशेव इत्यादयः शकुनाः शकुनग्रंथेभ्यो ज्ञेया विस्तरभयादिह नोक्ताः ९१ अथापशकुनान् शार्दूलविक्रीडितेनाह वंध्येति वंध्या प्रसिद्धा चर्म प्रसिद्धं तुषं धान्यादितुषं अस्थि सर्पलवणानि प्रसिद्धानि अंगारो निर्धूमोग्निपिंडः इंधनं पाकयोग्यं क्लीबः षण्ढः विट् उद्धृता विष्ठा अस्त्री विष्टा विवोसमावित्यमरः तैलं प्रसिद्धम् उन्मत्तो मद्यभूतावेशवान् प्रसारीरांतधातुविशेषः औषधं प्रसिद्धम् अरिः शत्रुः जटिलो जटावान् प्रव्राट् सन्यासी तृणं प्रसिद्धं व्याधितो चिकित्स्य आधिमान् नग्नः अपरिहितवस्त्रः कु

भारद्वाजनृपानवेदनिनदामांगल्यगीतं कुशाद्दृष्टाः सत्फलदाः प्रयाणसमयेपि कोघटः स्वानुगः ९१ वंध्याचर्मतुषास्थि सर्पलवणांगारेंधनक्लीवविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः नग्नाभ्यक्तविमुक्तकेशपतिताव्यंगक्षुधार्त्ता असृक्स्त्रीपुष्पंसरदः स्वगेहदहनंमार्जारयुद्धं क्षुतम् ९२ कषायीगुडतक्रपंकविधवाकुब्जाः कुटुंबे कलिर्वस्त्रादेस्खलनंलुलायसमरं कृष्णानि धान्यानि च॥ ((मारव्यतिरिक्तः अभ्यक्तः कृततैलाभ्यंगोस्नातः विमुक्तकेशः असंयतकेशः पतितो मद्यपानाद्यभिशापवान् व्यंगः छिन्ननासिकादिः क्षुधार्त्तः क्षुत्पीडितः असृक् रुधिरं स्त्रीणामृतुः शरठः कृकलासः स्वगेहदहनं स्वगेहे ऽग्निदाहः मार्जारयुद्धं प्रसिद्धं क्षुतं छिक्का ९२ अन्यदपि शार्दूलविक्रीडितेनाह कषायीति कषायो रागविशेषः तेन रक्तं वस्त्रं काषायं तद्वान् गुडतक्रे प्रसिद्धे पंकः कर्दमः विधवाकुब्जौ प्रसिद्धौ कुटुंबे कलिः पुत्रादिभिः कलहः वस्त्रादेः आदिशब्देन कमंडलुछत्रादेः स्खलनं निमित्तं विहस्तात्पतनम् लुलायो महिषस्तेषां समरं युद्धम् कृष्णवर्णानि धान्यानि माषादीनि कार्पासं तुलं वमनं वांतम् दक्षिणभागे गर्दभः शब्दः अतिरुत् क्रोधाधिक्यम् गर्भिणी गर्भवती मुंडो मुंडितशिरस्कः आर्द्राम्बरः आर्द्रवस्त्रः दुर्वचः स्वमुखोत्थपरमुखोत्थं वा दुष्टवाक्यम्॥ ९ ॥ २ ॥ ९ ॥

मु०टी०
या०प्र०
१०६

अंधबधिरौप्रसिद्धौ उदक्यारजस्वलास्त्री एतेपदार्थागन्तुःपुंसःयानसमयेदृष्टाःसंतोनशुभाः किंतुअशुभफलाः नारदः सर्वदिक्षुक्षुतंनेष्टंमोक्षतंमर
णप्रदम् अफलंतत्क्षुतंवाक्यवद्द्यौनसकेतवैरिति औपधेयानमारोहेविवादेशयनेऽशने विद्यारंभेबीजवापेक्षुतंसप्तमंशोभनमिति १०३ अथा
न्यच्छकुनंशार्दूलविक्रीडितेनाह गोधाजाहकेति गोधाप्राणिविशेषःप्रतःमोहइतिभाषयाजाहकागात्रसंकोचीप्राणिविशेषः सूकरःप्रसिद्धःअहिःस
र्पःशशकःप्रसिद्धःयानसमयेएषांगोधादीनांकीर्तनंस्वमुखेनान्यमुखेनवोच्चारणंशुभमुक्तंपुनरेतेषांगोधादीनांशब्दोरुतंअथवाविलोकनंदर्शनंनि
षिद्धं कपिऋक्षाणांकपीनांवानराणांऋक्षाणांभल्लूकादीनामुतोगोधादिभ्योव्यत्ययोज्ञेयः यथा वानराणांभल्लुकानांकीर्तनंनिषिद्धंतेषामेवदर्शनंशब्दि

कार्पासंवमनंचगर्दभरवो दर्भातिरुद्राभिणीमुण्डार्द्रांबरदुर्वचोंधबधिरो द क्यानदृष्टाऽशुभाः १०३ गोधाजाहकसूक
राहिशशकानांकीर्तनंशोभनंनोशब्दोनविलोकनंचकपिऋक्षाणामतोव्यत्ययः नद्युत्तारभयप्रवेशसमरेनष्टार्थसंवी
क्षणेव्यस्ताःशकुनान्नृपेक्षणविधौयात्रोदिताःशोभनाः १०४ वामांगेकोकिलापल्लीपोतकीसूकरीरला पिंगलच्छु
च्छुकाश्रेष्ठाशिवापुरुषसंज्ञिता १०५ ॥ तंवाननिषिद्धंशुभमित्यर्थः नद्युत्तारइति नद्यागंगादेरुत्तारणे भयेभयसंबंधिनीकार्येपलाय
नादिकेप्रवेशेगृहप्रवेशेसमरेसंग्रामे नष्टार्थस्यनष्टद्रव्यस्यसंवीक्षणेगवेषणेप्रागुक्ताःशकुनाःव्यस्ताविपरीताज्ञेयाः शुभशकुनाविप्राश्वेत्यादयो
ऽशुभाज्ञेयाः बंध्याचर्मेत्यादयशुभशकुनाःशुभफलदाज्ञेयाः नृपेति नृपदर्शनार्थगमनेयात्रायामुदिताविप्राश्वेत्यादयःशुभाज्ञेयाःनृपावलोकनेशकुनः
प्रयाणवदित्युक्तोराजदर्शनस्यभयस्थानत्वादपवादोयम् १०४ अथान्यदप्यनुष्टुभाह वामांगइति कोकिलापल्लीप्रसिद्धौ पोतकीदुर्गेति सूकरीजात्य
वटिकारलापक्षिविशेषः पिंगलाभैरवी छुछुकाछुछुन्दरी शिवाशृगाली पुरुषसंज्ञितापुंनाम्नःकपोतखंजनतित्तिरीहंसादयःएतेगच्छतांराजादीनां
वामांगेवामभागेशस्तास्युः १०५॥ १०५ ॥ १०५ ॥ १०५ ॥ ॐ ॥ ॥ ॥ ॥

राम:
१०६

अन्यदप्यनुष्टुभाह छिक्करइति छिक्करोमृगजातिः पिक्कुकः पक्षिविशेषः भासः श्रीकण्ठः वानराः एतेप्रसिद्धाः रुरुर्मृगविशेषः स्त्रीसंज्ञकाः स्त्री नाम्नांमृगपक्षिणः दक्षिणभागगाः शुभाः शेषाः प्रसिद्धाः १०६ अथोक्तव्यतिरिक्तानांमृगपक्षिणांसामान्यतः प्रादक्षिणेनशाकुनमनुष्टुभाह प्रदक्षिणगा इति उक्तव्यतिरिक्तामृगाः पक्षिणश्चयात्रायांप्रादक्षिण्येनगताश्चलिताः श्रेष्ठाः शुभफलदाः स्युः परंतु ओजामृगा विषमसंख्याः त्रिपंचसप्तादयश्चेद्व्रजंतोदृष्टास्तदातिधन्याः स्युः वामइति स्ववामभागेखरस्वनो गर्दभशब्दोतिधन्यः अथशकुनानांकिंचित्कालविशेषेनैर्बल्यमाह वराहः नग्राम्यारण्ययोर्यात्रेतिनारण्येग्रामसंस्थितः दिवाचरोनशर्वर्यांनचनक्तंचरोदिवा द्वंद्विनोमार्गितस्तत्रकलहामिषकांक्षिणः आपगांतरितामत्तानग्राह्याः शकुनाःक्वचिदेहिताश्चाजवालेयकुरंगोष्ट्रमृगाःशशाः निष्फलाःशिशिरेज्ञेयावसंतेकाककोकिलौ नतुभाद्रपदेग्राह्याःसूकराःश्ववृकादयः शरद्यासारगोकौंचाः श्रावणे

छिक्करः पिक्ककोभासः श्रीकंठोवानरोरुरुः स्त्रीसंज्ञकाःकाककंकाश्वानःस्युर्दक्षिणाःशुभाः १०६ प्रदक्षिणगताः श्रेष्ठायात्रायांमृगपक्षिणः ओजामृगाव्रजंतोतिधन्यावामेखरस्वनः १०७ आद्येऽपिशकुनेस्थित्वाप्राणानेकादशव्रजेत् द्वितीयेषोडशप्राणांस्तृतीयेनक्वचिद्व्रजेत् ॥

हस्तिवातकौ व्याघ्रसिंहवानरद्वीपिमहिषासविलेशयाः हेमंतेनिःफलाःज्ञेयाबालाःसर्वे विमानुषाइतिप्रभग्नशुष्कद्रुमकंटकीषुश्मशानभस्मास्थितुषाकुलेषु प्राकारशून्यालयजर्जरीषुसौम्योपिपापःशकुनःप्रकल्प्यः देवद्रुमवारिवरांबुयेदुर्जनकालसर्पोवरंक्षिपेद्व्याघ्रमुखेस्वभंगंवरंनरेद्रप्रनिधिर्भुजाभ्यांनोलंघयेद्दुःशकुनंकदापि १०७ अथावश्यककार्येविरुद्धशकुनेजातेपरिहारमनुष्टुभाह आद्यइति आवश्यककार्येविरुद्धशकुनेजातेएकादशप्राणान् स्थित्वाएकादशप्राणपरिच्छेद्यंकालंस्थित्वेत्यर्थः ततःसमीचीनेशकुनेगच्छेत् तत्रापिविरुद्धशकुनेसंजातेषोडशसंख्याकान्प्राणान्स्थित्वाशुभशकुनेव्रजेत् तत्रापिपुनस्तृतीयेविरुद्धशकुनेसंवृत्तेक्वचिदपिनव्रजेत् किंतुस्वगृहं गच्छेत् दशगुर्वक्षरैःप्राणइतिकश्यपेनतुप्राणायामत्रयमेवप्रतीक्ष्यमित्युक्तम् यायीविरुद्धशकुनमादौदृष्ट्वाप्रयत्नतः प्राणायामत्रयंकुर्याद्द्वितीयेद्विगुणं

अथयात्रानिवृत्तौगृहप्रवेशमुपजात्याह यात्रानिवृत्ताविति मृदूनि चित्रानुराधामृगरेवत्यः ध्रुवाणिरोहिण्युत्तरा श्रवणभिर्नक्षत्रैः सहितायात्रानिवृत्तौ
प्रवेशनंशुभंस्यात् क्षिप्रचरैर्नक्षत्रैः अश्विनीपुष्यहस्ताभिजिद्भिः श्रवणधनिष्ठाशततारापुनर्वसुस्वातीभिः प्रवेशनेपुनर्गमोयात्रास्यात् नक्षत्रविधा
निमध्यमानि द्विशादिनक्षत्रेषुप्रवेशेक्रमात्स्त्र्यादीनांनाशः यथा विशाखायांप्रवेशेस्त्रियानाशः कृत्तिकायांप्रवेशेगृहस्यदाहः स्यात् दारुणभेषु
तज्ज्ञेयः अग्रेविचार्यम् यत्रमासेयात्राकृतातन्मासान्नवमेमासियात्रादिनान्नवमेदिनेचप्रवेशोनविधेयः गुरुः निर्गमान्नवमेमासिप्रवेशोनिवेशोभनः
नवमेदिवसेचैवप्रवेशोनैवकारयेदिति अथविवाहप्रकरणोक्तदोषातिदेशंयात्रायुक्तदोषांश्चशिष्याणामविस्मरणार्थमनुभाषिण्याह अयनर्क्षेति

यात्रानिवृत्तौशुभदंप्रवेशनंमृदुध्रुवैः क्षिप्रचरैः पुनर्गमः द्वीशेऽनलेदारुणभेतथोग्रभेस्त्रीगेहपुत्रात्मविनाशनंक्रमात् १०९
अयनर्क्षमासतिथिकालवासरोद्भवशूलसंमुखवसितज्ञदिक्कपाः भृगुवक्रतादिपरिघार्कदण्डकस्त्वृतुजाद्यशौचमपि चो ॥त्सवादिकं ११०

एतेअयनशूलाद्योदोषाविवाहप्रकरणोक्तदोषाश्चयात्रायांनेष्टाः तत्रायनशूलः सौम्यायनेसूर्यविधूतदोषमिति मासोद्भवःशूले
द्विविधःग्रंथान्तरोक्तः वृषादित्रित्रिराशिषुअर्केप्राच्यादिदिक्षुनगंतव्यमित्येकः कपाटकंटकादिश्चद्वितीयः स्वरोदये ग्रयस्त्रयोदशाद्यश्चपूर्वाशादिषु
पैषाकपाटपूर्वतोज्ञेयंकार्त्तिकादित्रिकंतथा नभस्यतोवास्तुमधोस्केनकंटकइतिज्योतिषार्कवचनात् वसनशूलः नपूर्वदिशिशाक्रभेनविधुसौरिवा
रेतथेतितिथिशूलः योगिनी नवभूम्यइति संमुखवसितज्ञादिक्कपाः संमुखःशुक्रः संमुखोबुधः संमुखोदिक्स्वामीललाटी भृगवक्रतादि आदिशब्दात्
णत्वास्तमितत्वबाल्यादिकं वक्रास्तनीचेत्युक्तं परिघाख्यांदंडः पूर्वादिक्षुचतुर्दिक्ष्वित्युक्तः ऋत्वतुजाद्यशौचं स्वस्त्रीऋतुजंआर्तवस्नानकालपर्यंतं अशौचंज

अन्यदपिमंजुभाषिणीछंदसाह मृतपक्षेति मृतःपक्षः तमोभुक्तताराः स्पष्टाविश्वसंख्यादित्याद्युक्तः रिक्तरवितर्कसंख्यकाः चतुर्थीनवमीचतुर्दशीद्वादशीषष्ठ्यस्तिथयः उपलक्षणत्वादष्टमीपूर्णिमामावास्याशुक्लप्रतिपदः सौरिभौमरविवाराः वामपृष्ठगविधुः अजवृषभमिथुनकुलीरादित्यादिजातकोक्तवामपृष्ठराशिगतः आडलोरवेर्भतोऽब्धमोन्मितिरिति भ्रमणमृपिदेव वसुपंचकं धनिष्ठोत्तरार्द्धात्संचनसप्तभानि अपि त्रिमुहूर्ते श्चदक्षिणेवर्ज्याएतेपंचांगदोषाः १११ अथलग्नदोषान्स्रग्धरयाह लग्नेइतिजन्मराशेर्जन्मलग्नाद्वाऽष्टमगृहे अहितर्क्षाच्छत्रुजन्मराशेर्लग्नाद्वाषष्ठम् जन्मलग्नंयात्रालग्नेंतदीशाः तेषांजन्मराशिजन्मलग्नाभ्या मष्टमभवनयोःस्वामिनः रिपुजन्मराशिजन्मलग्नाभ्यांषष्ठभवनयोःस्वामिनोवायात्रालग्ने कुंभमीनयोर्नवलवोनवांशाल्

मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्चसौरिरविभौमवासराः अपिवामपृष्ठगविधुस्तथाऽडलोवसुपंचकाभिजिदथापिदक्षिणे १११ लग्नेजन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्चषष्ठंतदीशावालग्नेकुंभमीनर्क्षनवलतनूवापिपृष्ठोदयंच पृष्ठाशामक्षसंस्थंदशमशनिरथोसप्तमेचापिकाव्यः केंद्रेवक्राश्चवक्रीग्रहदिवसविवाहोक्तदोषाश्चनेष्टाः ११२ ॥इतिमुहूर्तचिंतामणौयात्राप्रकरणंसमाप्तम् ११ ॥

ग्नंच पृष्ठोदयागोजाश्विककर्किमिथुनाः सप्तमातिशास्त्याः पृष्ठोदयाविमिथुनाइत्याद्युक्ताः पृष्ठाशासंस्थमक्षंगंतव्यदिग्विलोमलग्नं दशमेशनिः सप्तमेकाव्यः शुक्रः केंद्रे वक्राः वक्रिणोग्रहाः वक्रिग्रहवाराश्चएतेदोषाः विवाहोक्तदोषाः उत्पातान्सहपातदग्धतिथिभिरित्याद्युक्ताः तेसर्वेयात्रायांवर्ज्याः नत्रसप्तमशुक्रव्यतिरिक्तोजामित्रदोषोनास्तीतिज्ञेयम् ११२ ॥इतिश्रीमिताक्षरायांयात्राप्रकरणंसमाप्तम् ११ अथवास्तुप्रकरणंव्याख्यायते गृहनिर्माणप्रयोजनंभविष्यपुराणे गृहस्थस्यक्रियाः सर्वानसिद्ध्यंतिगृहंविनायतस्तस्माद्गृहारंभप्रवेशसमयौब्रुवे गृहस्वसताकम् नसिध्यंतिनिफलाभवंतीत्यर्थः ॥ छ ॥ २ ॥ छ ॥ २ ॥ छ ॥ २ ॥

इत्याद्यर्थमनस्यास्तोच्यग्रामादिषुस्वस्यशुभाशुभं लाभालाभादिविचारं शार्दूलविक्रीडितेनाह यद्भमिति नामभात्व्यावहारिकनामभात्व्यावहारि
कनामराशेर्वृश्चिकाख्यो यस्यग्रामादेर्मे यथा चरणाद्रिसंज्ञकोग्रामराशिः मीनाख्यः सचद्वितीयोनवमःपंचमः एकादशोसम्भिदशमश्चस्या तदासौ ग्रामः
स्वस्यशुभःस्यात् अन्यथानशुभइत्यर्थः यथानीलकंठराशेर्वृश्चिकाख्यातसंचमोमीनराशिश्चरणाद्रेरतश्चरणाद्रीनीलकंठस्यवासयोग्यःनामर्क्षं उक्तं
च अवनामराशेरेवग्राह्यःकाकिण्यांवर्गशुद्धौचवादे द्यूतेस्वरोदये मंत्रेपुनर्भूवरणे नामराशेःप्रधानतइति अथग्रामात्मनोरुत्तमर्णाधमर्णत्वंचाह स्ववर्ग
इति वर्गास्तुअकचटतपयशवर्गाः स्वेगृमार्जारसिंहशुनां सर्पाखुमृगमावीनांनिजपंचमवैरिणामष्टौइत्युक्ता तत्रयस्यपुंसोयत्संख्याकोवर्गोगरुडादिस्त
द्वर्गसंख्यांद्विगुणंविधायपरस्यग्रामादेर्वर्गसंख्ययाढ्यांचकृत्वातैरष्टभिःशेषितमवशिष्टंताःपुंसःकाकिण्योज्ञेयाः एवंग्रामादेरपिवर्गसंख्यांद्विगुणीकृत्वा

यद्भंधंकस्रुतेशदिङ्मितमसौग्रामःशुभोनामभात्स्ववर्गंद्विगुणंविधायपरवर्गाढ्यंगजैःशेषितं काकिण्यस्त्वजयोश्चतद्वि
वरतोयस्याधिकाःसोर्थदोथद्वारंद्विजवैश्यशूद्रनृपराशीनांहितंपूर्वतः १ ॥

((ग्रस्यपुंसोवर्गसंख्ययाढ्यांकृत्वागजैर्भजेदवशिष्टाःग्रा
मस्यकाकिण्योभवति एवंअनयोःपुरुषग्रामयोःकाकिणीनांविवरायस्याधिकाअवशिष्यंतेसोर्थदःअपरस्यलाभदः यथा नीलकंठस्यवर्गःसर्पःतत्सं
ख्या ५ द्विगुणः १० चरणाद्रिवर्गःसिंहः ३ तत्संख्ययायुक्ता १३ गजभक्तावशेषं ५ नीलकंठस्यकाकिण्यःएवग्रामवर्गसंख्या ३ द्विगुणा६ नीलकंठवर्ग५
संख्ययायुक्ताः ११ अष्टभक्ताशेषं ३ ग्रामस्यकाकिण्यःद्वयोरंतशेषं२ नीलकंठस्याधिकत्वेनदातृत्वाद्ग्रामस्याहानिरित्यर्थः उक्तंच स्ववर्गंद्विगुणीकृत्यपरव
र्गेनयोजयेत् अष्टभिस्तुहरेद्भागंयोधिकःसऋणीभवेदिति अथद्वारवेशनमाह अथेति द्विजादिराशीनांपुंसांक्रमेणपूर्वतःप्राच्यादिदिक्चतुष्टयेद्वारं
हितंयथा द्विजराशीनांकर्कवृश्चिकमीनानांपूर्वदिशि वैश्यराशीनांवृषकन्यामकराणांदक्षिणदिशि शूद्रराशीनांमिथुनतुलाकुंभानांपश्चिमदिशिनृपराशी

अथराशिपरत्वेन ग्रामनिवासे निषिद्धस्थानानि वसंततिलकयाह गोसिंहेति वक्ष्यमिष्टस्य ग्रामस्य वस्त्रविभागं वक्ष्यन्नवधा विभागं कृत्वा मध्ये विभागे
गोसिंहनक्रमिथुनं न निवसेत् वृषसिंहमकरमिथुनराशिगतः पुरुषा न वसेयुः अथ पूर्वककुभः पूर्वदिशानोऽष्टदिग्गतोऽष्टदिक्षु अलिर्वृश्चिकः बदाद्दि
राशिमतः पुरुषा न वसेयुः यथा पूर्वस्यां वृश्चिकः आग्नेय्यां झषो मीनः दक्षिणस्यां कन्या नैर्ऋत्यां कर्कः पश्चिमायां धनुः वायव्यां तुला उत्तरस्यां मेषः ऐ
शान्यां कुंभः न वसेदित्यर्थः यथा अवर्गः पूर्वस्यां कवर्ग आग्नेय्यां चवर्गो दक्षिणस्यां टवर्गो नैर्ऋत्यां तवर्गः पश्चिमायां पवर्गो वायव्यां यवर्ग उत्तरस्यां शव
र्ग ऐशान्यां बली इत्यर्थः कीदृशाः वर्गाः स्वपंचमपराः स्वस्मात्पंचमः परः शत्रुर्येषां ते यथा अवर्गः पूर्वस्यां बली अनेन पश्चिमायां द्वारं निवासो न
विधेयः एवं कवर्गादीनामपि वायव्यादौ द्वारं निवासो वा न विधेयः २ अथेष्टनक्षत्रायाभ्यां इष्टभूम्या विस्तारायाममपीन्द्रवज्रेन्द्रवंशापूर्वार्धेनाह ए

गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिझषांगनाश्च कर्कोधनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपं
चमपरा बलिनः स्युरैन्द्र्याः २ एकोनितेष्टर्क्षहताद्धितिथ्यो रूपोनितेष्टायहतेन्दुनागैः॥

एकोनितेति स्वेष्टायेति च तत्र राशि
कूटादिरंपरीत्य विचिंतयेदिति वसिष्ठोक्तेः यद्देवनक्षत्रं व्यवहारनाम्नां विवाहोक्तमेलापकविधिना शुभदं स्यात् तद्देव स्वेष्टभं कल्प्यं यश्च ध्वजा
द्यष्टायेषु विषम आयः ईप्सितः स्यात्स एवेष्टायः कल्प्यः ताभ्यां विस्तारायामज्ञानं यथा नीलकंठस्यानुराधानक्षत्रं तस्य रोहिण्या सह मेलापकः संभवती
ति इष्टभं रोहिणी कल्पितं तत्संख्या ४ एकोनितेष्टर्क्ष ३ अनेन द्वितिथ्यो १५२ हताः ४५६ इष्टायः सिंहः कल्पितः तृतीयः रूपोनितेष्टायः २ अनेनेंदुनागाः
८१ गुणिताः १६२ युताः ६१८ अनेन भ १७ युताः ६३५ भूपाश्विभि २१६ विभक्ते शेषं २०३ इदं भीमवक्षेत्रफलम् गृहस्येष्टापनेषु संभवं अथ कल्पित
दैर्घ्यं २९ अनेन भक्ते लब्धो विस्तारः ७ अथ कल्पितविस्तृतिः ७ भक्तो लब्धं दैर्घ्यं २९ अत्र गोपीराजाचार्यकृतसूत्रम् विश्वेभ्यकायगोभू १९ हति
भयुजिफलं गोपिराजो भशेषात् सायंवेष्टाष्टदिग्घ्ना २१६ युतमहि ८ हताद्दर्क २ मक्रुता २१ स्य विश्वे १३॥ बाणाः ५ सिद्धा २४ ष्टि १६ नागेन्द्र २७ तिथ्यूनि २९

गिरिश११श्या२कृती२२द्द१४वुर्ई नत्ता२५त्यष्ट्यं१७क१स्मा१नृखे२०ना१अर्थवं४विकृति२३दिना१५द्या७कृती२ई भेंदु१८काष्ठा१० गोपीराजः कथय
तिगोभूहृतिभयुजिसतिविष्णु अहिहताद्दक्च्चकृत्याख्यत्रिश्वाद्यः फले अह विगतः एकोयस्मात्तव्येकः सचासौ आयश्चव्येकायः ध्वजादिरिष्टायः
सचगोभुवश्चएषांपरस्परगुणानांव्येकायगोभूहतिश्चभंव्येकायगोभूहतिभेर्यायुक्व्येकायगोभूहतिमयुक्तस्मिन्सतिभशेषात्भे२७ भक्ते सतिय
च्छेषंतस्माहिमुनाप्तानंशिष्यअहिहता अष्टगुणिताद्दक्हो च्चकृत्याख्याएकविंशतिः विश्वेत्रयोदशैत्याद्योगृहक्षेत्रफलं सम्प्रइष्टायसहितां आहवरनि
अत्रोदाहरणं इष्टायः३व्येकः२गोभू११हतिः३८इष्टक्षेरोहिणीतत्संख्याम४युतं४२अस्मात्भैः२७ शेषं१५एतत्संख्ययाफलं२५अहि८हतं२००सा
यं२०३इदंस्वेष्टायनक्षत्रभवक्षेत्रफलंपूर्वोक्तमेव महद्दहत्प्रमाणमाह वेति वा०थवाततइष्टायसहितंजातंयत्क्षेत्रफलंअष्टिदग्घ्येषुयुतंअष्टिश्वद

युक्ताघनै१७श्चापियुवाविभक्तामूयाश्चिभिः शेषमितोहिपिंडम् ३ स्वेष्टायनक्षत्रभवोथदैर्घ्यहत्स्याद्दिलतिविस्ततिद्दच्चदीर्घता
आयाध्वजोधूमहरिश्वगोखरेभध्वांक्षकाः पिंडइहाष्टशेषिते ४ ध्वजादिकाः सर्वदिशिध्वजेमुखंकार्यहरोपूर्वयमोत्तरेत
॥ था॥

शश्च अष्टिदशः अष्टिभिः षोडशाधिकंद्विशत्या२१६हतोगुणितोयदृष्टः एकहिन्याद्येकः तेनयुक्तोकार्यमित्यर्थः अत्रैवाचार्यप्रपोत्रगो
पिराजस्यापिपद्यं इष्टक्षद्वियमुनीद्रवोहिरहि८ हृच्छेषात्स्येजेत्वायतोनेविलुध्यतिशोध्यमष्टसंहितांच्छेषंत्रिहिताग्रकंचेत्स्यादिष्टयुतंषथातुनद
शेषस्याद्थोरामहृत्स्यान्माहिकरान्विताः फलमभीष्टायक्षजजायते सिद्धेर्भक्तः स्यात्करादिष्टदीर्घमानार्थवेकारितिप्राप्तभभोमानतावद्यावत्स्वसि
पेदिष्टमानविस्तारस्यादिष्टदैर्घ्येणभक्ते ३ अथोत्तरार्धेनध्वजाद्यायानाह आयेर्वर्णपरत्वेनचद्वारनिवेशनमुपजात्याह आयाइति ध्वजादिकाइति॥
पिंडेक्षेत्रफलेअष्टशेषितेयद्दवशिष्टंतत्संख्यामिताध्वजादिकाआयाःस्युः ध्वजधूमौप्रसिद्धौहरिः सिंहः श्वाकुक्कुरः गौर्वृषः खरोगर्दभः इभोहस्ती ध्वांक्षः
काकः स्वार्थेकः ४ सर्वदिशीति ध्वजाख्ये आयेसर्वदिशिदिक्चतुष्टयेपिगृहद्वारंकार्यहरौसिंहायेपूर्वदक्षिणोत्तरदिक्षुद्वारंकार्यम्॥ छ ॥ ५ ॥

नपश्चिमादिशि तथा वृषाख्ये प्राच्यां दिश्येव द्वारं नान्यदिक्षु गजाख्ये आये याम्यमययोः पूर्वदक्षिणदिशोः गृहद्वारं कार्यम् आयानां प्रयोजनमाह विश्वकर्मा
वृषं सिंहं गजं चैव खेटे कर्पटकोटयोः द्विपः पुनः प्रयोक्तव्यो वापीकूपसरस्तु च मृगेंद्रमासने दद्यात् शयनेषु गजं पुनः वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्
अग्निवेश्मसु सर्वेषु गृहे वह्न्युपजीविनां धूम्रं नियोजयेत्के चित्स्थानं म्लेच्छादिजातिषु खरं वैश्यगृहे शस्तो ध्वांक्षः संन्यासिकुटीषु च वृषसिंहध्वजं श्वापि
प्रासादपुरवेश्मनि गजायैवाध्वजायैवागजानां सदनं शुभम् अश्वालये ध्वजायेवसूरायेव वृषभे पिवा अमंत्र छत्रवस्त्राणां वृषायेवाध्वजेपिवापादुकोपा
नहौ कार्ये सिंहाख्येप्यथवा ध्वजे उक्तानामप्यमुक्तानां सर्वेषां च ध्वजः शुभः इति अथ ब्राह्मणादिवर्णपरत्वेन द्वारनिवेशनमाह अथवेति द्विजादितो ब्रा
ह्मणादिवर्णविभागेन पश्चादुदक् पूर्वयमे यथा ब्राह्मणस्य पश्चान्मुखं क्षत्रियस्योदङ्मुखं वैश्यस्य पूर्वमुखं शूद्रस्य दक्षिणामुखमित्यर्थः श्रीपतिः ध्व
जे प्रतीचीमुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनंतीति ४ अथ गृहारंभे विशिष्यकालनिषेधमु

प्राच्यां वृषे प्राग्यमयोर्गजे यश्चात्पश्चादुदक्पूर्वयमे द्विजादितः ५ गृहेशतत्स्त्रीसुखवित्तनाशोऽर्केंदुजीज्यशुक्रे विबलेऽस्तनीचे ५

पजात्याह गृहेशेति अर्केन्दुजीज्यशुक्रे विबले निर्बले अस्ते अस्तंगते नीचे नीचराशिगते सति क्रमात् गृहेशतत्स्त्रीसुखवित्तनाशो भवति
यथा सूर्ये निर्बले नीचस्थिते गृहेशस्य नाशः इंदौ निर्बले अस्तमिते नीचगते वा गृहेशस्य स्त्रीनाशः गुरौ इज्ये निर्बलेऽस्तगे नीचगते वा गृहेशस्य सु
खनाशः शुक्रे निर्बलेऽस्तगे नीचगे वा वित्तनाशः वसिष्ठस्तु नीचे शत्रुगते जीवे शुक्रे चंद्रेऽथवा रवौ निर्मितं सदनं शश्वद्धिनि निस्वत्वमाप्नुयादिति अ
स्तु दोषोऽत्र न ग्राह्यः प्रातिरत्नमालिकाबुधैः नास्ति दोषः सदा चंद्रे नैमित्रे स्वस्य नीचतइति कर्तुरिति पन्नसंत्रेदिनचंद्रस्तद्विधुभे सत्यगृहस्य विस्तारायामव
शादुत्पन्नभं तद्गृहभं तस्मिन्पुरःस्थिते संमुखस्थिते सति कर्तुर्गृहनिर्माणकर्तुस्तद्गृहे स्थितिर्निवासो न स्यात् पृष्ठगते वा विधुवास्तुनो भे सति खनिः
खननं चोरकृतायद्वारं तद्दुःशात्सर्वस्वहानिः स्यादित्यर्थः पुरः पृष्ठस्थितं त्वं च दिग्द्वारभक्रमेण यथा ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥

गृहेद्वारंयस्यांदिशिविधित्सितंतद्दिङ्नक्षत्रेषुतत्पृष्ठदिङ्नक्षत्रेषुचगृहारंभोनकार्यः वामदक्षिणनक्षत्रेषुगृहारंभः सुखेनकार्यः यदुक्तंब्रह्मशंभु
ना गृहारंभलब्धर्क्षसेधवनक्षत्रेचचंद्रमाः शलाकासप्तकेदंपकृत्तिकादिक्रमेणच वामदक्षिणभागेतत्रशस्तशंनिकारकं अग्रपृष्ठेनदातव्यंयदि
च्छेच्छ्रेयआत्मनः ऋक्षचंद्रस्यवासोऽग्रअग्रपृष्ठेनशस्यतइति अयमाशयः कृत्तिकादिसप्तनक्षत्रेषुअनुराधादिसप्तसुवागृहनक्षत्रेचंद्रनक्षत्रेच
सतिपूर्वद्वारंपश्चिमद्वारंवानकार्यं तत्रचंद्रः पृष्ठस्थितोऽग्रस्थितोवाभवति एवंमघादिसप्तसुधनिष्ठादिसप्तसुवागृहनक्षत्रेचंद्रनक्षत्रेवासतिदक्षि
णद्वारमुत्तरद्वारंवानकार्यमित्यर्थः ६ इदानींव्ययकेअंशानपुरः सरंसफलमंशकज्ञानंउपजात्याह भमिति प्रागुक्तदिशाकल्पितं यद्गृहभंतत्रनागैरष्टभि
स्तष्टंअवशिष्टंव्ययईरितः यथा रोहिणी ८ अयमेवव्ययःअसौव्ययः ध्रुवादिनामाक्षरयुक् ध्रुवादिनामान्यधुनैववक्ष्यतियत् यानिदिक्षुनामानि

कर्त्तुः स्थितिर्नोविधुवास्तुनोर्भंपुरःस्थितेपृष्ठगतेंस्वनिःस्यात् ६ भंनागतष्टंव्ययईरितासौध्रुवादिनामाक्षरयुक्सपिंडः
तष्टागुणैरिंद्रकृतांतभूपात्यंशाभवेयुर्नेशभांतकोऽत्र ७ दिक्पूर्वादितःशालाध्रुवाभूर्द्वेकिलताभ्याः शालाध्रुवांकसंयो
गःसैकोवेश्मधुवादिकम् ८ ॥

॥ दिक्षुद्वाराणिचिकीर्षितानितदनुरोधेनयदागतंध्रुवादिनेसर्वदस्तरसस्व्ययायुक्तः तत: सपिंडः प्रागानी
तपिंडाप्युक्तः गुणैस्त्रिभिस्तष्टेऽभंकावशिष्टः एकद्वित्रिशेषेणइंद्रयमराजसंज्ञकास्त्रयोंशाःस्युः अत्रगृहारंभेंतकोयमाख्योंशकोनशुभः अ
र्थादिंद्रराजानौशुभफलदौ ७ अथशालाध्रुवाद्यानयनानुष्टुभाह दिक्ष्विति प्राच्यांद्वारंचिकीर्षितेशालाध्रुवांकएकः दक्षिणस्यांद्वौ पश्चिमायांकृता
श्चत्वारः उत्तरस्यांगजाअष्टौ अर्थादिक्परत्वेनयावंतिद्वाराणिएकद्वेत्रीणि चत्वारिवाचिकीर्षितानितावतांशालाध्रुवांकानांसंयोगःसैकएकयुतस्तत्स्व्
ध्रुवादिकंवेश्मगृहंस्यात् यथा पूर्वस्यांपश्चिमायांद्वारेअभीष्टेशालाध्रुवौ१।४ अनयोर्योगः ५ सैकः ६ गृहजातंकांतारव्यं एवंपूर्वदक्षिणोत्तरदिक्षु
शालाध्रुवाणाम् १।२।८ संयोगः ११ सैकः १२ धनदाख्यंगृहंदिक्चतुष्टयेविजयाख्यंगृहंषोडशमिति॥ ८ ॥ ८ ॥ ८ ॥ २

अथध्रुवादीनांनामाक्षरसंख्यायथावक्रंछंदसाह तिथ्यर्केति दिक्पूर्वादितइत्यादिनायत् ध्रुवादिवेश्मसमाप्तंशालाध्रुवांकसंयोगः सैकोवेश्मेत्युक्त
दिशासंख्यामवधारयेत् सांकेतसंख्यापंचदशीद्वादशीअष्टमीषोडशीनवमीएकादशीचतुर्दशीवास्यात्तदागृहनामाक्षरंत्रयात्मकंस्यात् १५।१२।८।१६।९
।११।१४ अत्रत्रीण्येवाक्षराणिसैवसंख्या प्रथमाद्वितीयाचतुर्थीपंचमीषष्ठीदशमीतृतीयात्रयोदशीवास्यात् तदागृहनामद्वौअक्षरौद्व्यात्मकंस्यात्
सासंख्यासप्तमीस्यात्तदाध्यचतुरक्षरंगृहनाम ९ अथपद्यपिध्रुवादिनामाक्षरसंख्याज्ञानंप्राकप्रयोगेनैवजाततथापितन्मध्येकानिशुभानिका
न्यशुभानिइत्यसदृशफलसूचनार्थंषोडशगृहाणांनामानिअथोगीतछंदसाह ध्रुवधान्येइति अत्रार्यागीतिलक्षणंवाआर्यापूर्वार्धेयदिगुरुणैके

तिथ्यर्काष्टाष्टिगोरुद्रशक्रेनामाक्षरंत्रयं भूद्व्यब्धीषुगदिकूवह्निविश्वेषुद्वौनगे चेषुः ९ ध्रुवधान्येजयनंदेखरकां
तमनोरमंसुमुखंदुर्मुखोग्रं रिपुदंवित्तदनाशेचाक्रंदंविपुलंविजयाख्यंस्यात् १० पिंडेनवांकाग्गगजाग्निनामना
गाब्धिनागैर्गुणितेःक्रमेण विभाजितेनागवगांकसूर्यैनामक्षीनिथ्यृक्षकभानुभिश्च ११ ॥ ११ ॥ ९ ॥

नाधिकेननिधनेस्युःकंइतरत्तद्वन्निखिलंपरीसमुदितेयमार्यागीतिरिति अत्रार्यासपूर्वार्द्धे॥ऽ॰ऽ॥ऽऽ॥ऽ ॥॰ऽ॰ऽ॥उत्तरार्द्धे॥ऽ॰ऽ॥ऽऽ॥ऽ॰॰।
।॰।ऽ।ऽ॰ऽऽ मान्यलक्षणमप्यनुसंधेयं विशेषलक्षणस्यसामान्यलक्षणाधीनत्वात् निधनेप्रांतेध्रुवमूर्ध्वमुखंप्रथमंगृहं धान्यपूर्वद्वारंद्वितीयज
यंदक्षिणद्वारंतृतीयं नंदंप्राग्दक्षिणद्वारंचतुर्थं खरंपश्चिमद्वारंपंचमं कांतंप्राक्पश्चिमद्वारंषष्ठं मनोरमंदक्षिणपश्चिमद्वारंसप्तमं सुवक्त्रंप्राग्दक्षि
णपश्चिमद्वारमष्टमं दुर्मुखमुत्तरद्वारंनवमंक्रूरंपूर्वोत्तरद्वारंदशमं रिपुदंदक्षिणोत्तरद्वारमेकादशम् वित्तदंपूर्वदक्षिणोत्तरद्वारंद्वादशंनाशाख्यंपश्चि
मोत्तरद्वारंत्रयोदशं आक्रंदंप्राक्पश्चिमोत्तरद्वारंचतुर्दशम् विपुलाख्यंदक्षिणपश्चिमोत्तरद्वारंपंचदशं विजयंचतुर्दिक्द्वारंषोडशमिति १० अथके
षांचिन्मतेनगृहस्यायादिनवकमनुजातिकापद्याभ्यामाह पिंडइति ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥

आयइति पिंडेक्षेत्रफलेनवधास्थापितेक्रमेणनवादिरंकैर्गुणितेक्रमेणनागादिभि रंकैर्भक्तेचसतियदवशिष्टंतदाया
दिकंस्यात् यथा क्षेत्रफलंनवभिर्गुणितं अष्टभिर्भक्तंशिष्टमायःस्यात् तद्यथा पिण्डः २०३ नवगुणितः १८२७ अष्टभक्तेशेषं ३ सिंहायोजातः एवंसर्वे
प्यानीताः इमे वारः ७ अंशकः ५ द्रव्यं ४ ऋणं १ नक्षत्रं ४ रोहिणी तिथिश्चतुर्थी ४ योगः २ प्रीतिः आयुः ६४ उक्तंच गो॰ क॰ लं६ अ॰८ गुणा ३८ नाग८।
जलधि४व्याले८हतंभूफलनागा८द्यं७क९ दिवाकरा१२ष्ट८भ२७ तिथी१५ योगैः २७ स्वसूर्ये१२० भजेत् अयंवारमथांशकं धनमृणंतारां तिथिंचि
तयेद्योगंचायुरिती[illegible]षकपदेभागेहृतेः नात्रिकाद्यति अथैषांप्रयोजनम् विषमायःशुभायैवसमायःशोकदुःखदः वाराणांसूर्यारवारराश्यंशाःसदा
वह्निभयप्रदाः यथा[illegible]णिवगतोभौमवारः सनिंद्यः तद्राशिःमेषवृश्चिकौ तौ निंद्यौ तदंशायस्मिन्कस्मिंश्चिल्लग्नेमेषवृश्चिकनवांशानिषिद्धः एवंसूर्यवा
रोपि अन्येषांवारराश्यंशाःशुभाः अंशानांच गृहस्यागतनक्षत्रंतद्द्विराश्यात्मकंयदि तन्नवांशवशात्तत्रज्ञातव्यंसर्वदागृह इति कृत्तिकाद्विराश्यात्मिका
वशेषेमेषः द्व्यादिशेषेवृषः मृगेद्व्यधिकेशेषेमिथुनं अन्यथावृषः पुनर्वसावप्यंशकत्रयंयावन्मिथुनं अन्यथाकर्कः एवमुत्तरफाल्गुन्यादिषुद्विराश्यात्म
केषूहनीयंनतुनिःसंदिग्धेष्वश्विन्यादिषु धनर्णयोश्चधनाधिकंगृहं वृद्धौ निर्धनंयदृणाधिकमिति नक्षत्रस्य विपत्तिदोषप्रत्ताराप्रत्यराप्रतिकूलदा नि
धनाख्यातारकातुसर्वदानिधनप्रदा अस्यार्थः गृहकर्तुर्नक्षत्राद्गृहभंसंख्यानवभक्तावशिष्टंयदि विपत्ताराद्विकंस्यात् तदातद्गृहमनिष्टंस्यात् अन्यथा
शुभानि कश्यपः दत्तेदुःस्वतृतीयर्क्षंपंचमर्क्षंयशःक्षयम् आयुःक्षयंसप्तमर्क्षंकर्तृभाद्यादिसद्मभमिति यदातुगृहकर्तुर्गृहस्यचैकमेवनक्षत्रंतत्रस्व
पमिवनिर्णयमाह गृहेति गृहेशर्क्षस्वामिनक्षत्रंप्रागुक्तप्रकारेणानीतंगृहभंचतयोरैक्यंएकमेवचेद्भवेत्स्यात्तद्गृहकर्तुर्मरणप्रदंस्यात् गृहस्यतस्यतेस्त्वे
कंधिष्ण्यंचेन्निधनप्रदमितिवसिष्ठोक्तेः वास्तुशास्त्रेद्विराश्यात्मकेषुराश्यादिनिर्णयोन्यथाभिहितः अश्विन्यादित्रयंमेषेसिंहेप्रोक्तंमघात्रयम् मू
लादित्रितयंचापिशेषेषुनवराशयइति अयंपक्षेवास्तुशास्त्रोनवांशानुक्तेरुक्ताः गृहस्यनक्षत्रराशिज्ञानेवर्णोवश्यमित्याद्युक्तप्रकारेणगृहस्वामि
नक्षत्रराशिवशात् घटितादिविचारोविधेयः तत्रनाडीवेधप्राशस्त्यमुक्तंचिंतामणौ सेव्यसेवकयोश्चैवगृहतत्स्वामिनोरपि॥ ६॥ ॥

परस्परंमित्रयोश्चेदेकनाडीप्रशस्यतइति तिथिप्रयोजनंदर्शरिक्तांचवर्जयेदिति योगानामपिदुष्टयोगाश्चवर्ज्याः आयुःप्रयोजनं तावत्कालंगृहावस्थि
तिरिति अत्राभीष्टांशादिसिध्यर्थं अंगुलादिकं प्रक्षिप्यविशोध्यवाक्षेत्रफलसाध्यं १२ अथगृहारंभेवृषवास्तुचक्रंशालिनीभ्यामाह गेहाद्यारंभइति
लाभोरामैरिति गेहंगृहं आदिशब्देनप्रासादग्रामादितदारंभेसतिअर्कभात् सूर्याक्रांतनक्षत्रात् रामैस्त्रिभिर्भैः वृषस्यवत्सस्यशीर्षस्थितैःसद्भिःदाहः
फलंस्यात् ततोवेदभैः अग्रपादेपुरस्थितपादद्वयस्थितैः शून्यगृहंजनवासरहितंस्यात् ततश्चतुर्भैःपृष्ठपादद्वयस्थैः स्थिरत्वंगृहकर्तुः ततोरामैःपृष्ठ
स्थैः श्रीस्यात् ततोयुगैःचतुर्भैः दक्षिणकुक्षिस्थितैःलाभः ततस्त्रिभिःपुच्छगैःस्वामिनोगृहकर्तुर्नाशः ततोवेदैः वामकुक्षौनैरव्यंदारिद्र्यं ततस्त्रिभिर्मुख

आयोवारांशकोद्रव्यमृणमृक्षंतिथिर्युतिः आयुश्चाथगृहेशर्क्षगृहभैक्यंमृतिप्रदम् १२ गुणकाः ९।९।६।८।३।८।८।४।८।
भाजकाः ८।७।९।१२।८।२७।१५।२७।१२० गेहाद्यारंभेऽर्कभाद्वत्सशीर्षेरामैर्दाहोवेदभैरग्रपादे शून्यंवेदैःपृष्ठपादेस्थि
रत्वंरामैःपृष्ठेश्रीर्युगैर्दक्षकुक्षौ १३ लाभोरामैःपुच्छगैःस्वामिनाशोवेदैर्नैरव्यंवामकुक्षौमुखस्थैः रामैःपीडासंततंचार्कधि
ष्ण्यादश्वैरुद्रैर्दिग्भिरुक्तंप्रसत्स्यात् १५ कुंभेर्केफाल्गुनेप्रागपरंमुखगृहंश्रावणेसिंहकर्कौःपौषेनक्रेचयाम्योत्तरमुखं
सदनंगोजकेर्केन्वराधे॥ २ ॥

स्थैः गृहकर्तुः पीडासंततंअनवरतंस्यात् उक्तंचमात्तचरणेः त्रिवेदवेदाग्नियुगाग्निवेदत्रिकेषुभानोःशशिभंगृहेषु दाहोविनाशःस्थिरताधनंश्रीःशू
न्यचदारिद्र्यमृतिक्रमेणेति अथैतस्यनिष्कृष्टार्थमाह वेति अर्कधिष्ण्यात् सूर्याक्रांतनक्षत्रात् अश्वैःसप्तभैरसत्फलं ततोरुद्रैरेकादशाधिष्ण्यैःसत्फलम् ततोदिग्भिर्दशनक्षत्रैः
रसत्फलमुक्तंस्यादिति निष्कृष्टोऽर्थः उक्तंच रविभात्सप्तनेष्टामिश्रभान्येकादशाष्टमात् दशशेषाण्यनिष्टानिसाभिजिद्वृषवास्तुनीति १३ । १४ अथसूर्य
चंद्रमासेकेनप्रागादिदिक्षुद्वाराणिगृहनिर्माणमस्त्राणिस्रग्धरयाह कुंभेऽर्कइति कुंभस्थेसूर्येफाल्गुनेचमासि॥ ॥ ॥ ॥

प्रागपरमुखं गेहं प्राङ्मुखं पश्चिममुखं वा गृहं सत् शुभफलं स्यात् श्रावणे मासि सिंहकर्कसंक्रान्तौ प्राङ्मुखं पश्चिममुखं वा गृहं स्यात् पौषे मासे मके म
करसंक्रान्तौ च प्रागपरमुखं गृहं स्यात् अथ गार्ग्यः वृषमेषगे सूर्ये राधे वैशाखे मासि याम्योत्तरमुखसद्म शुभं स्यात् मार्गे मार्गशीर्षे अलिके अलिगे तुला वृ
श्चिकगते सूर्ये सति याम्योत्तरमुखसदनं दक्षिणमुखमुत्तरमुखं वा सदनं गृहं स्यात् नारदः गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् वृषस्थे धनवृद्धिः स्या
न्मिथुने मरणं ध्रुवं कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्द्धनं कन्यारोगं तुला सौख्यं वृश्चिके धनवर्धनं कार्मुके च महाहानिर्मकरे स्याद्धनागमः कुंभे तु रत्नला
भः स्यान्मीने सद्म भयावहमिति चान्द्रमासानाह श्रीपतिः शोको धान्यं मृतिपशुहृतार्थ व्यवृद्धिर्विनाशो युद्धं भृत्यक्षतिरथ धनं श्रीश्च वह्नेर्भयं च लक्ष्मीप्रा
प्तिर्भवति भवनारंभ [illegible] तुः क्रमेण चैत्रादौ चेमुनिभिरितिफलं वास्तुशास्त्रोपदिष्टं इति अत्र सौरचान्द्रमासानां महान् शुभाशुभफलविरोधः अत्र निर्णी
तं गृहद्वारानुकूलरविसंक्रमसमीचीने विहितमासेष्वेव वैशाखादिषु गृहारंभः कार्य इति विरोधाभाव इति तथैवोपनिबद्धं स्मृ नियममाह श्रीपतिः।
कर्कनक्रहरिकुंभगतेर्के पूर्वपश्चिममुखानि गृहाणि तौलिमेषवृषवृश्चिकयोगे दक्षिणोत्तरमुखानि च कुर्यात् अन्यथा यदि करोति दुर्मतिर्व्याधिशो
कभयनाशमश्नुते मीनचापमिथुनोपगनागे कारयेन्न गृहमेव भास्करे इति तत्र कुंभार्कसहिते फाल्गुने प्रागपरमुखं एवं कार्यं उभयोर्विहितयोरेकवाक्यं
ताश्रयणात् एवमग्रेपि सर्वत्र जगन्मोहने पाषाणेष्टादिगेहानि निंद्यमासे न कारयेत् तृणदारुगृहारंभे मासदोषो न विद्यत इति अथ नक्षत्राण्याह ध्रुवा
ति श्रवणरोहिण्युत्तरात्रयं मृदूनि मृगरेवतीचित्रानुराधाः वरुणः शततारका स्वाती वसुर्धनिष्ठा अर्को हस्तः पुष्यश्च एतेषु गृहनिर्माणं सत् शुभं स्या
त् गर्गः श्रुत्युत्तरे पित्र्ये रोहिण्यां पुष्ये मैत्रे करद्वये धनिष्ठाद्वितये पौष्णे गृहारंभः प्रशस्यत इति अत्र मृगेणोक्तः नृदुक्षिप्रमहेश्वराद्युक्तेः सूतीगेहमिति आदि
त्यपुनर्वसौ सूतिकागृहनिर्माणं प्रशस्तम् तत्रेति तत्र सूतीगृहे हरिभविधिभयोः श्रवणाभिजितयोर्नक्षत्रयोः प्रवेशः शस्तः लल्लः पुनर्वसौ नृपादी
नां कर्तव्यं सूतिकागृहं श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेदिति अत्र नृपपदोपादानात् ब्राह्मणानां पूर्वोक्तनक्षत्रेष्वेव कार्यम् आवश्यकत्वे तु
श्रवणाभिजितोर्मुहूर्त्तः तदुदयो वा ग्राह्यः तच्च सूतिगृहं नैर्ऋत्यां कार्यम् नैर्ऋत्यां सूतिकागृहमिति वसिष्ठोक्तेः ॥ छ ॥ छ ॥ ६

वराहेणात्रानक्तनेसत्त्वाण्यभिहितानि हस्तादित्यशशांकपुष्यपवनप्राजेशमित्रोत्तराचित्राश्विश्रवणेषुवृश्चिकघटौहित्वाविरिक्तेतिथौ शु।
क्रावर्षीशनैश्चरहस्याशिनांवारेनुकूलेविधौसाङ्ग्वेश्मनिसूतिकागृहविधिः सम्यक्कारः कीर्त्यतेइति नवमेमासिसूतिकागृहेप्रवेशःकार्यः गर्गः
मासेतुनवमेप्राप्तेपूर्वपक्षेशुभेदिने सूतिकासंभवेकालेसद्यएवप्रवेशयेत् रोहिण्येंद्रवपौष्णेषुस्वातीवारुणयोरपि पुष्येपुनर्वसौहस्तेधनिष्ठा।
स्युत्तरासु च मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवेशनं सर्वेशुभग्रहाः केंद्रेपापाश्चत्रिषडायगाः शुभांशेशुभसंदृष्टेसूतिकावेशनंशुभमिति १९
अथप्रागभिहितानांसौराणांचान्द्राणांमासानांप्रकारांतरेणैकवाक्यतांशार्दूलविक्रीडितेनाह केश्चिदिति पूर्वदिग्द्वारवेशेनैकावाक्यतोक्ता इदा।
नींमेषस्थेरवौमधौचैत्रमासेगेहप्रारब्धंशुभंस्यात् तथावृषस्थेसूर्येज्येष्ठमासेकर्कस्थेशुचावाषाढेसिंहगतेर्केभाद्रपदेमासि घटेतुलास्थेरवौआ

मार्गेजूकालिकेसहुवमृदुवरुणस्वातिवस्वर्कपुष्यैः स्त्रीगेहंत्वदित्यांहरिभविधिमयोस्तत्रशस्तःप्रवेशः १५ केश्चिन्मे
षरवौमधौवृषभगेज्येष्ठेशुचौकर्कटेभाद्रेसिंहगतेघटेश्वयुजिचार्जेलौमृगेपौषके॥ ((श्वयुज्याश्विनेमासे अलौवृश्चिक।

स्थेर्केऊर्जेकार्तिकेमासे मृगेमकरस्थेर्केपौषमासेनक्रघटेमकरेकुंभेर्केमाघेप्रारब्धंगृहंशुभंस्यादित्यर्थः इतिकेश्चिन्निगदितं अनेनमेषेर्के
चैत्रेपिगृहंशुभं यस्तुचैत्रनिषेधः समीनार्कविषयः वृषस्थेर्केज्येष्ठेपिशुभं यस्तुज्येष्ठनिषेधः समिथुनार्कविषयः कर्कस्थेर्केआषाढेपिशुभं
आषाढनिषेधस्तुमिथुनार्कविषयः सिंहेर्केभाद्रेपिशुभम् भाद्रनिषेधस्तुकन्यार्कविषयः श्रावणस्तुतत्रविहितत्वादेवशुभः वृश्चिकेर्केकार्त्ति
केपिशुभम् निषेधविषयस्त्वयमेववक्ष्यति मार्गशीर्षस्तुविहितएव मकरस्थेर्केपौषेपिशुभं धनुरर्कसाहित्येसोप्यशुभः मकरकुंभस्थेर्केमासे
पिशुभम् निषेधस्तुधनुरर्कविषयः अतएवसौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकः मासास्युर्गृहनिर्माणेपुत्रारोग्यधनप्रदाइतिनारदवाक्य
मेमासेतनपस्येतपसिमाधवेनभसित्विषे॥ ६ ॥

ऊर्जे च गृहनिर्माणं पुत्रपौत्रप्रवर्द्धनमिति वसिष्ठवाक्यं च आश्विनकार्त्तिकमध्य(मा)नां शुभत्वप्रतिपादकं तुलावृश्चिकमकरकुंभार्कसाहित्ये पाश
स्यं परवचनांतरेर्बोध्य इति निषेधः प्रागुक्तविषयएव एवं फाल्गुनस्य शुभत्वं कुंभार्कविषयं कुंभार्कराहित्ये तु निषिद्धः ननु कार्त्तिकमाघमासौ श्रीप
तिना निषिद्धौ तयोः को विषयइत्यत आह अथेति ऊर्जः कार्त्तिको मासः कन्यागतेर्के न सन् न शुभः च पुनः तथा माघमासः धनुष्यपि धनुरर्के न स
न् नन्वेतद्युक्तं यतः शुक्लादि चांद्रमासे चैत्रादिमाससंज्ञाः संति तत्र कार्त्तिके कन्यासंक्रांतिर्माघे धनुःसंक्रांतिश्च कदापि न संभवति अत आह कृ
ष्णादिमासादिति मासोद्विविधः शुक्लादिः कृष्णादिश्च तत्र चैत्रशुक्लप्रतिपदामारभ्यामावास्यांतपर्यंतं शुक्लादिः कृष्णप्रतिपदमारभ्य पूर्णिमातप
र्यंतं कृष्णादिः उभयोरपि शास्त्रे व्यवहारः अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिनेदिन इति मासेभाद्रपदे ष्टम्यां कृष्णपक्षे धरात्रके भवेत्प्रोष्ठपदेमासि ज्यं तु

माघेन कुघटे शुभं निगदितं गेहं तथोर्जे न सत् कन्यायां च तथा धनुष्यपि न सत्कृष्णादिमासाद्भवेत् ॥ १६ ॥ पूर्णेन्दुतः प्राग्व
दनं नवम्यादिषूत्तरास्यं त्वथ पश्चिमास्यं दर्शादितः शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदन्ति ॥ १७ ॥ १७ ॥ं

नाम सास्मृतेति च अन्नयदि दर्शांतो मासो विवक्ष्यते तदा भाद्रपदकृष्णपक्षे श्रावणमासे चेत्येवं स्यात् तदेतु न मासेस्य कृष्णपक्षस्त्वेप्रमाणं तत्राश्विनपू
र्णिमातः कार्त्तिकपूर्णिमांतं कस्मादित्वेन व्यवहारात् तत्र कन्यासंक्रांतिसंभवान्निषेध उपपन्नो भवति एवमेव माघमासे धनुरर्कसंभवेन निषेधसार्थ
क्यमित्यलम् ॥ १६ ॥ अथ तिथिपरत्वेन द्वारनिषेधमुपजातिकयाह पूर्णेन्दुतइति पूर्णेन्दुतः पूर्णिमातः कृष्णाष्टमीपर्यंतं प्राङ्मुखं गृहं शुभं न वदंति कृष्ण
नवमीतः चतुर्दशीपर्यंतं क्रियमाणमुत्तरास्यं न शुभम् अथ दर्शादितः शुक्लाष्टमीपर्यंतं पश्चिमास्यं गृहं न शुभं शुक्लनवमीतश्चतुर्दशीपर्यंतं दक्षिणा
स्यं गृहं शुभं न वदंति तास्तास्तिथिषु तत्तद्दिङ्मुखं गृहं न कर्त्तव्यमित्यर्थः व्यवहारोच्चये पूर्णिमातोष्टमी यावत्पूर्वास्यं वर्जयेद्गृहं उत्तरास्यं न कुर्वीत
नवम्यादि चतुर्दशी अमायाश्चाष्टमी यावत्पश्चिमास्यं [illegible] चतुर्दशीमितिवधादि विचारो न लिखितः ग्रंथगौर

नैर्ऋतीपश्चिमयोर्मध्ये विद्याभ्यासस्य पश्चिमवायव्ययोर्मध्ये रोदनस्य गृहं वायव्योत्तरयोर्मध्ये रतस्य संभोगस्य गृहं उत्तरेशान्ययोर्मध्ये औषध स्य गृहं ऐशानीप्राच्योर्मध्ये उक्तव्यतिरिक्त सर्ववस्तूनी धाम गृहं कार्यं स्यादित्यर्थः वसिष्ठः इंद्राग्न्योर्मथनमध्ये याम्याग्न्योर्घृतमंदिरम् यमराक्षसयोर्मध्ये पुरीषत्यागमंदिरं राक्षसांबुपयोर्मध्ये विद्याभ्यासस्य मंदिरम् तोयेशानिलयोर्मध्ये रोदनं मंदिरं ततः कामोपभोगसदनं वायुकौबेरमध्यमं कौबेरीशानयोर्मध्ये चिकित्सामंदिरं सदा गृहं हरीशयोर्मध्ये सर्ववस्तुकसंग्रहं सदनं कारयेदेवं क्रमादुक्तानि षोडशेति २१ अथ विशेषमुपजातिकयाह जीवार्केति अत्र योगद्वये ग्रहस्थानयोर्यथासंख्यसंबंधः यथा जीवो लग्ने अर्को रिपुषष्ठे विधुर्धो जामित्रे सप्तमे शुक्रश्चतुर्थे शनिस्तृतीये एवंविधे लग्ने प्रारब्धस्य गृ

तन्मध्यतस्तु मथनाज्यपुरीषविद्याभ्यासाख्यरोदनरतौषधसर्वधाम २१ जीवार्कविच्छुक्रशनैश्चरेषु लग्नारिजामित्रसुखत्रिकेषु स्थितिः शतं स्याच्छरदां सितार्कारेज्यैस्तनुत्र्यंगसुतेः शतेद्वे २२ लग्नांबरायेषु भृगुज्ञभानुभिः केंद्रे गुरौ षर्षशताघुरालयम् बुधौ गुरुर्व्योम्नि शशी कुजार्कजौ लाभे तदाशीतिसमायुरालयं २३ स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगते ऽथवा शनौ स्वोच्चे लाभगे वा लक्ष्म्यायुक्तं चिरं गृहम् २४॥

हस्य स्थितिरब्द शतं वर्षशतं स्यात् अयमेको योगः सितेति शुक्रो लग्ने अर्कस्तृतीये आरः षष्ठे ईज्यः पंचमे एवंविधे प्रारब्धस्य गृहस्य स्थितिर्द्वे शते वर्षशतद्वयं स्यात् २२ अथान्ययोगद्वयमिंद्रवंशयाह लग्नांबरायेष्विति अत्रापि योगद्वये स्थानग्रहयोर्यथासंख्यसंबंधः लग्ने शुक्रः दशमे बुधः एकादशे सूर्यः लग्नव्यतिरिक्तकेंद्रे गुरुः सदैवंविधे योगे प्रारब्ध आलयः गृहं वर्षशतमायुरवस्थानं यस्य तादृशं स्यात् अथ द्वितीयः बुध इति चतुर्थे गुरुः दशमे चंद्रः मंगलशनैश्चरावेकादशे तदा गृहमशीतिसमा वर्षाण्यायुर्यस्य तादृशं स्यात् २३ अथान्ययोगत्रयमनुष्टुभाह स्वोच्चे इति स्वोच्चस्य मीनस्थे शुक्रे लग्नगते अथवा स्वोच्चस्य कर्कस्थे गुरौ चतुर्थस्थानगते सति अथवा स्वोच्चस्ये तुलास्थे शनौ एकादशस्थानगामिनि सति चिरं लक्ष्म्यायुक्तं गृहं स्यात् यदा समुदायो भवेत् तदायतनाविधिलक्ष्म्या

अथगृहस्यपरहस्तगामित्वयोगमनुष्टुभाह द्यूनांबरेइति एकोपिग्रहोऽस्तकूरऋभफलदावापरांशस्तःसन्यदिद्यूनेसप्तमेस्यात् अथवांऽबरे दश
मेस्यात् तदासंग्रहःतद्गृहंप्रारब्धं अब्दांतवर्षमध्येएवपरहस्तस्यअन्यहस्तगमिकुर्यात् वेद्वर्णपः ब्राह्मणादिवर्णस्वामीविप्राधीशौ भार्गवेज्यावि
त्याद्यभिहितःसचेद्वलेस्यात् यदास्ववर्णाधीशःसबलस्यात्तदापरहस्तगामीनस्यादित्यर्थः २५ अथान्यविशेषवसंततिलकयाह पुष्येति पुष्य
ध्रुवाणिघसिद्धानि इंदुमृगः हरिः श्रवणः सर्पोऽश्लेषाजलंपूर्वाषाढा एतैर्नक्षत्रैःसजीवैः गुरुयुक्तैः तद्वासरेणगुरुवासरेणकृतंकर्तुमारब्धंगृहंस्व
तान्पुत्रान्राज्यंचदद्यादितिताद्दशमस्यात् अत्रसमतिर्वसिष्ठनारदवाक्यतः द्वीशेति द्वीशाविशाखा अश्विनी तक्षाचित्रा वसुधनिष्ठा याशीशततारका
शिवआर्द्राएतैर्नक्षत्रैःसशुक्रैः शुक्रसहितैःसितस्यशुक्रस्यवासरेचकृतंगेहं धनानिसुवर्णानिधान्यानिव्रीह्यादीनिददातिताद्दशंगृहंस्यात्॥

द्यूनांबरेयदेकोपिपरांशस्थोग्रहोगृहं अब्दांतःपरहस्तस्थंकुर्याच्चेद्वर्णपोऽबलः २५ पुष्यध्रुवेंदुहरिसर्पजलैःसजीवै
स्तद्वासरेणचकृतंसुतराज्यदंस्यात् द्वीशाश्वितक्षवसुपाशिशिवैःसशुक्रैः वारेसितस्यचगृहं धनधान्यदंस्यात् २६
सारैःकरेज्यांत्यमघांबुमूलैः कौजेह्नि वेश्माग्निसुतार्तिदंस्यात्॥ १ तथाचनारदः श्रवणाषाढयोश्चैवरोहिण्यांचोत्तरात्रये गु

रुवारेकृतंवेश्मराजयोगमिहोच्यते तद्गृहेजातपुत्रस्यराज्यंभवतिनिश्चयात् अत्रवसिष्ठवाक्येननक्षत्राधिक्यंतदनुसारेणमूलेननक्षत्राभिधा
ने ईज्यांतरात्रयाहीडुविष्णुधातृजलेंडुषुगुरुणासहितेषुकृतंगेहंश्रियान्वितमितिवसिष्ठोक्तेः अश्विनीशततारास्वविशाखोचाद्रंचित्रकेध
निष्ठाशतभेशुक्रसंयुक्तेशुक्रवासरेतद्वेश्मनिप्रजातस्तुकुबेरसदृशोभवेत् अत्रापिनक्षत्रभेदःप्राग्वत्समाधिः २६ अथान्ययोगद्वयमिंद्रवज्र
याह सारैरिति हस्तपुष्यरेवतीमघापूर्वाषाढामूलैः सारैर्मंगलसहितैः कौजेभौमसंबंधिनिअन्हिवारेकृतंगृहंअग्निसुतार्तिदंअग्निपीडासुतपीडां
दस्यातिताद्दशंस्यात् उक्तंच मूलंचरेवतीचैवकृत्तिकाषाढमेवच एषुभौमेनयुक्तेषुवारेतस्यैवनिर्मितं अग्निनादह्यतेतत्तत्पुत्रनाशश्चजायतइति

सङ्गैरितिरोहिण्युत्तरफाल्गुनीचित्राहस्तैः सङ्गैः बुधयुक्तैः तस्य च वारे कृतं गृहं स्वदं पुत्रदं च स्यात् उक्तं च हस्तार्यमत्वाष्ट्रदास्रउत्तरास्योडुपे
पिवा सबुधे बुधवारे च धनपुत्रसुखप्रदमिति २७ अथान्यं योगमनुष्टुभाह अजैकपादिति पूर्वाभाद्रपदोत्तरभाद्रपदाज्येष्ठानुराधास्वातीभरणीनक्ष
त्रैः समंदैः शनैश्चरयुक्तैः मंदस्यैव वारे च आरब्धं गृहं राक्षसभूतसमायुतं स्यात् उक्तं च आजपाद्वितयेयाम्यमित्रेन्द्रानलभेपिवा समंदे मंदवारे च भूत्यते यक्षै
राक्षसैः पुत्रेजातेऽथवा तस्मिन् गृह्यते यक्षराक्षसैरिति अन्वायं निष्कर्षोऽर्थः पूर्वं गृहारंभनक्षत्राण्यवधेयानि ततो वृषवास्तुचक्रे शुभाध्यानि पश्चादिदं योग
पंचक विचार्यैव गृहारंभः शुभफलदो भवेत् २८ अथ केषांचिन्मतेन द्वारचक्रं सफलं शार्दूलविक्रीडितेनाह सूर्यक्षादिति सूर्याधिष्ठितनक्षत्रात् शुभ

सङ्गैः करास्त्वार्यमतक्षहस्तैर्ज्ञस्यैव वारे सुखपुत्रदं स्यात् २७ अजैकपादहिर्बुध्न्यशक्रमित्रानलांतकैः समंदैर्मंद
वारे स्याद्रक्षोभूतयुतं गृहं २८ सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभैर्नागैरुद्वसनं ततो गजमितैः शा
खासु सौख्यं भवेत् देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं
शुभम् २९ इति श्रीवास्तुप्रकरणं समाप्तम्॥ ॥ भैश्चतुर्भिर्नक्षत्रैः शिरसि उपरि अवस्थितैः फलं कर्तुः लक्ष्मीप्राप्तिः स्या
त् ततः नागभैः अष्टभिः कोणगैः कोणेषु व्यवस्थितैः उद्वसनं जनवासरहितं स्यात् ततः गजभैर्गजमितैरष्टमितैर्द्वारशाखासु व्यवस्थितैर्गृहस्वामिनः
सौख्यं स्यात् ततः गुणभैः गुणभैस्त्रिभिर्नक्षत्रैः देहल्यामवस्थितैर्गृहस्वामिनो मृतिः स्यात् ततस्तदग्रिमैर्वेदभैश्चतुर्भिर्नक्षत्रैः मध्यरूपे अवका
शे स्थितैः सौख्यं स्यात् फलितार्थमाह चक्रमिति इदं चक्रं विलोक्य सुधिया शुभफलं द्वारं विधेयं कर्तव्यमिति गद्येनोपसंहरति २९
॥ इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां गृहारंभप्रकरणं समाप्तम् द्वादशम् १२ ॥

अथ गृहप्रवेशप्रकरणं व्याख्यायते तत्र प्रवेशश्चतुर्धा अपूर्वप्रवेशः सपूर्वप्रवेशः द्वंद्वाभयप्रवेशः वधूप्रवेशश्चेति तत्र वधूप्रवेशस्यान्वर्थसंज्ञ
कत्वाल्लक्षणं प्रोक्तं स च प्राग्भिहितः अन्येषां लक्षणमाह वसिष्ठः अपूर्वसंज्ञः प्रथमप्रवेशो यात्रावसाने तु सपूर्वसंज्ञः द्वंद्वाभयस्त्वग्निभयादि
जातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्ट इति नवगृहं निर्माय यः प्रथमः प्रवेशः सोऽपूर्वसंज्ञः प्रवेशः यस्तु यात्रानिवृत्त्यनंतरं गृहप्रवेशः स सपूर्वसंज्ञः।
यस्तु अग्निभयेनाग्निसंदाहेन आदिशब्देन कुड्येन राज्ञापातितेन गृहनाशस्तद्गृहं यदा पुनः संपाद्यते तस्मिन् यः प्रवेशः स द्वंद्वाभय इत्युच्यते अन्वर्थसं
ज्ञा चेयं द्वंद्वं शीतोष्णं शीतशब्देन जलं उष्णशब्देनाग्निरुच्यते लक्षणया जलाप्लावेन अवरत वृष्टिपातेन वा गृहपातस्तु जलभयम् अग्निकृत
दाहेन यो गृहनाशः स त्वग्निभयम् तस्माच्छीतोष्णरूपाद्द्वंद्वात्पुनः स्थापनेन यद्भयमित्युच्यते द्वंद्वाभयं विध्यते तस्मिन्नित्यर्थः आदिग्रहणाज्जितिमा
वर्ष्यावक्रस्यया नाशः प्रवेशो द्वंद्वाभय इति तत्रापूर्वसपूर्वप्रवेशयोः कालं शार्दूलविक्रीडितेनाह सौम्यायन इति एषु सौम्यायन इत्यादिकेषु पदा

सौम्यायने ज्येष्ठतपोंत्यमाधवे यात्रानिवृत्तौ नृपतेर्नवे गृहे स्याद्वेशनं द्वास्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदये स्थिरे ॥ १

र्थसत्कः नृपतेर्यात्रानिवृत्तौ अथवा नवे नूतने स्थापिते गृहे वेशनं प्रवेशनं स्यात् अत्र सौम्यायन इति मंदबुद्धीनां शीघ्रप्रतिपत्त्यर्थं ज्येष्ठेति ज्ये
ष्ठमाघफाल्गुनवैशाखेषु प्रवेशनं शुभं नारदः अपि सौम्यायने कार्यं नववेश्मप्रवेशनं राज्ञा यात्रानिवृत्तौ चेति तथा माघफाल्गुनवैशाखज्येष्ठमासेषु
शोभनः प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोरिति मध्यमोक्तिरावश्यकविषया द्वास्थेति यस्मिन्गृहे प्रवेशः कर्तुमिष्यते तस्य यस्यां दिशि मुखं
तद्दिङ्नक्षत्रैः पूर्वादिषु चतुर्दिक्षु सप्तसप्तानलर्क्षतद्दित्याद्युक्तैः मृदुध्रुवनक्षत्रैः प्रवेशनं स्यात् यद्दिक्द्वारं मंदिरं तद्दिग्गृक्षैरुक्तैः स्यात्प्रवेशनं
र्वैरितिवसिष्ठोक्तेः अन्यदपि तत्रैव अर्कानिलार्यादितिदस्त्रविष्णुरक्षेः प्रविष्टं नवमंदिरं यत् अब्दत्रयात्तसरहस्तयातं शशांशुधिष्ण्येषु च तम् तुद
यादिति जन्मर्क्षेति जन्मर्क्षं जन्मराशिः जन्मलग्नं प्रसिद्धं ताभ्यामुपचयं तृतीयषष्ठदशमैकादशस्थानं तस्मिन् उदये लग्ने स्थिरे स्थिरराशौ वृषसिंह

वेशनं शुभं नारदः कर्तुर्जन्मभलग्नेवाताभ्यामुपचयेपि वा प्रवेशलग्नेस्याद्वृद्धिरन्यभे शोकृन्निस्वतेति सौम्येस्थिरे भे शुभदृष्टियुक्ते लग्नेऽथवाद्यंगगृ
हे विलग्ने इतिच सौम्यग्रहयुक्ते द्व्यंगे द्विस्वभावराशौ १ अथजीर्णगृहप्रवेशे विशेषमिदं वज्रयाह जीर्णगृह इति जीर्णे पुरातनेऽन्येनिर्मिते गृहे
अग्निभयात् अग्निनाशाहात् आदिशब्देन बहुवृष्टिराजकोपाद्युपद्रवास्ततितेगृहे पुनरपि सम्यगेवकृतेउस्थापिते पूर्वोक्तासर्वेपि मासाज्ञेयाः किं
च मार्गोर्ज्जयोः मार्गशीर्षकार्तिकयोः च श्रावणिकेपि श्रावणेपि वेशः प्रवेशः सन् शुभफलदः स्यात् सनत्कुमारः गृहारंभोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेन्
गृहमिति अत्र सामान्यतो गृहारंभोदिता मासा गृहप्रवेशेऽभिहिताः तेच सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः मासाः स्युर्गृहनिर्माणे पुत्रारोग्य
धनप्रदा इति नारदोक्ते मार्गशीर्षफाल्गुनश्रावणकार्त्तिका विहिताः तत्रोत्तरायण एव गृहप्रवेशस्य वाक्यांतरविहितत्वात् श्रावणकार्त्तिकमार्गशीर्ष
णामुत्तरायणत्वाभावात् विरोधेन नूतनजीर्णगृहप्रवेशाभ्यां व्यवस्था कथं प्रागभिहितनारदवाक्यमउत्तरायणसाहचर्येण नूतनगृहप्रवेशस पूर्वप्रवेश

**जीर्णेगृहेऽग्न्यादिभयान्नवेपि मार्गोर्ज्जयोः श्रावणिकेपिसत्स्यात् वेशोंऽबुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणात्र ॥१२॥**

योर्विधानात् गृहारंभोदितैर्मासैरित्यनेन तु सामान्यतस्त्रिविधस्यापि प्रवेशस्य विधानादुत्तरायणीयमासास्त्रिविधगृहप्रवेशे शुभाः दक्षिणाय
नीयमासाः श्रावणादयस्तु जीर्णगृहप्रवेशविषयाः अतएव नारदो मार्गशीर्षकार्त्तिकयोर्नूतनप्रवेशे मध्यमत्वमाह अर्थादिव जीर्णगृहप्रवेशे उत्कृष्टमध्यत्व
स्यतः अंबुपेति अंबुपः शततारका ईज्यः पुष्यः अनिलः स्वाती वासवं धनिष्ठा एषु भेषु जीर्णगृहे अग्न्यादिभयान्नवेपि गृहप्रवेशः शुभः प्राक्पद्योक्तन
क्षत्रेषु तु शुभ एवेति किं मुतिकन्यायादवगम्यते ज्योतिःप्रकाशे प्रवेशो नूतने हर्म्ये ध्रुवैर्मैत्रैः स्मरवासवे पुष्यस्वातीयुतैस्तैस्तु जीर्णे स्याद्वासवद्वये इति
नावश्यमिति अत्रैवंविधे जीर्णगृहे अग्न्यादिभयान्नवेपि आवश्यकमस्तादिविचारणा शुक्रास्तगुर्वस्तबाल्यवार्धकसिंहस्थगुर्वादिदोषाणां विचार
णाविचारो नास्ति अस्तादयः कालदोषाः संतु मा वा संतु तथापि गृहप्रवेशः कार्यः सोपि पंचांगशुद्धिमात्रमंगीकृत्य विहितनक्षत्रेष्वेव कार्यः ॥ ॥

ज्योतिःप्रकाशे नित्ययाने गृहे जीर्णे प्राशने वरिधानके वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोरिति वसिष्ठः नवप्रवेशेऽस्याथकालशुद्धिर्गेहे हृसोपूर्विक
योः कराचित् प्रवेशपंचांगदिनशुलग्नेवास्त्वर्चनंपूर्ववदेवकुर्यात् पूर्ववदेवनूतनप्रवेशे यथावास्तुपूजा तथाहृसोपूर्विकयोरपि कार्येत्यर्थः नारदेनतु
यात्राविधेर्निवृत्तिप्रवेशे कालशुद्धिरपिसिंतैवेतितद्वाक्यंप्रागभिहितंतदेतयोर्वाक्ययोरावश्यकानवश्यत्वेनव्यवस्था अत्रत्रिविधेपिप्रवेशेप्रवेशना
स्त्रंक्रूराक्रांतंक्रूरविद्धंवासर्वथावर्ज्यंवसिष्ठः क्रूरग्रहाधिष्ठितविद्धभंचविवर्जनीयंत्रिविधप्रवेशइति २ अथगृहप्रवेशादिनात्प्राक्कर्तव्यंवास्तुपूजा
विवक्षुस्तन्नक्षत्राण्याहउपजातिकापूर्वार्द्धेनाह मृदुध्रुवेति एतुसप्तदशसुनक्षत्रेषुवास्तुपुरुषस्यार्चनंभूतबलिंचकारयेत् गृहपतिर्वास्तुपूजांकुर्यात्
पुरोहितोवास्तुपूजांकारयेत् तत्क्रोरन्यतरस्यामित्यणोकर्त्तुः कर्मत्वं वास्तुपूजाप्रकारमाह वसिष्ठः निर्माणेमंदिराणांचप्रवेशेत्रिविधेपिच वास्तुपू
जाप्रकर्तव्यायस्मात्तांकथयाम्यतः गृहमध्येहस्तमात्रंसमंतात्तंदुलोपरि एकाशीतिपदंकार्यंतत्वेस्तुल्यंसुशोभनम् एकद्वित्रिपदाःपंचचत्वारिंश

**मृदुध्रुवक्षिप्रचरेषुमूलभेवास्त्वर्चनंभूतबलिंचकारयेत् त्रिकोणकेंद्रायधनत्रिगैःशुभैर्लग्नेत्रिषष्ठायगतैश्चपाप ॥ कैः ३**

त्सुराश्चिताः द्वात्रिंशद्बाह्यतोवक्ष्यमाणाश्चांतस्त्रयोदशतेषांस्थानानिनामानिवक्ष्यामीश्वरकोणतः तत्राग्निः शुभुकोणस्थस्त्वसौ
चैकपदेश्वरः आकाशंचापूरयतः क्रमादेकपदेश्वरौ एवंप्राच्यांनवज्ञात्वात्वेवमेवान्यदिक्षुच आद्यश्चांत्यावेकपदौद्विपदाःपंचमध्यगाः शिखाद्य
एवाकाशांताअमराःपूर्वभागगाः आद्यश्चांत्यावेकपदौद्विपदाःपंचमध्यमाःपूषाद्यष्टौपमाताःस्युरमरायाम्यभागगाः आद्यश्चांत्यावेकपदौद्विपदाःपंच
मध्यगाः अष्टौपितृगणाधीशात्पापांताःपश्चिमेसुराः आद्यंतौद्वावेकपदौद्विपदाःपंचमध्यगाः रोगादिदिसंतःसुराःसप्तसौम्यदिशिक्रमात् तत्राद्य
स्यचतुःकोणेष्वीशानादिषुचक्रमात् आपःसावित्रविजयरुद्राश्चैकपदेश्वराः मध्येनवपदोब्रह्मातस्येशानादिकोणगाः आपवत्सोथसविताविबुधाधि
पसंज्ञकःराजयक्ष्माचचत्वारः सुराश्चैकपदेश्वराः ब्रह्मणःपूर्वतोदिक्षु त्रिपदाश्चामराअमी अर्यमाचविवस्वांश्चमित्रःपृथ्वीधरःक्रमात् ॥ ६ ॥

स्वस्थकेलेषुदेवे पुष्पापिते षीदृशं भवेत् कोणेषु पंचपंचैव चतुर्थैकपदाः सदा भागा दिदिक्षु द्विपदाः पंचपंच यथाक्रमं ब्रह्मणः पर्वतो दिक्षु विपि
नेषीदृशं भवेत् कोणेषु पंचपंचैक द्विपदाः स्युः समीपगाः हिरण्यरेताः पर्जन्यो जयंतः पाकशासनः सूर्यः सत्यो भृशाकाशौ वायुपूषा च वितथाः गृह
स्ततः पितृपतिर्गंधर्वो भृंगराजकः यमः पितृगणाधीशस्तथा दौवारिकाह्वयः सुग्रीवः पुष्पदंतश्च जलाधीशो निशाचरः शेषः पापश्च रोगो हिर्मु
ख्यो भल्लाट एव च सोमसर्पो दित्यदितीह्यत्रिंशदमराः स्मृताः आपश्चैवापवत्सश्च जयोरुद्रस्तथैव च मध्ये नवपदो ब्रह्मा तस्यैते स्युः समीपगाः
ब्रह्माद्यंत रितादेवाः परितो ब्रह्मणः स्मृताः अर्यमा सविता चैव विवस्वान्विबुधाधिपः मित्रोथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् आपवत्सो
ष्टमः पंचचत्वारिंशत्सुरोत्तमाः ज्ञात्वैवं स्थाननामानि ब्रह्मणा सहितान्यजेत् वास्तुज्ञो वास्तुमंत्रेण गंधपुष्पाक्षतादिभिः प्रणवेनार्चयेद्वापि अथ
वा स्वस्वनामभिः शुक्लवस्त्रयुगं दद्याद्धूपदीपबलैः सह अपूपैर्भूरिनैवेद्यैः वाद्यैः सह समर्चयेत् तांबूलं च ततो दद्याद्देवेभ्यश्च पृथक् पृथक् दत्वा
पुष्पांजलिं कर्त्ता प्रार्थयेद्वास्तुपूरुषं वास्तुपुरुष नमस्तेस्तु भूशय्याभिरत प्रभो मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा इति प्रार्थ्य ततो दद्याद्दक्षिणाम
र्चकाय च विप्रेभ्यो भोजनं दत्वा स्वयं भुंजीत बंधुभिः एवं यः कुरुते सम्यग्वास्तुपूजां प्रयत्नतः आरोग्यपुत्रपौत्रादि धनं धान्यं लभेन्नरः वास्तुपूजा
मकृत्वा यः प्रविशेन्नवमंदिरम् रोगान्नानाविधान् क्लेशान्नश्नुते बहुसंकटम् इति वसिष्ठसंहितायां वास्तुशांतिः नारदाद्यः पंचांगशुद्धिमान्युक्ते
पूर्वदिने एव वास्तुपूजामाहुः विधाय पूर्वदिवसे वास्तुपूजाबलिक्रियामिति तृतीयश्लोकार्द्धस्य टीका अथ लग्नशुद्धिं तिथिवारशुद्धिं चोपजातिको
त्तरार्द्धेनेंद्रवज्रयाह त्रिकोणेति शुद्धांबुरंध्र इति नवमपंचमप्रथमचतुर्थसप्तमदशमैकादशद्वितीयतृतीयस्थानानामन्यतमस्थानस्थितैः शु
भैरुपलक्षिते तथा तृतीयषष्ठैकादशस्थानस्थैः पापग्रहैरुपलक्षिते च तथाबु चतुर्थस्थानं रंध्रमष्टमस्थानं तस्मिन् शुद्धे सर्वग्रहरहिते अंबुरंध्रे यस्मिं
स्तादृशे लग्ने गृहं विशेत् कीदृशे लग्ने विजनुर्भमृत्यौ भराशिर्लग्नं च जनुषि जन्मकाले भे जनुर्भे ताभ्यां मृत्युरष्टमभवनम् जनुर्भमृत्युः विगतो जनुर्भमृत्यु
र्यस्मिन् स्वजन्मलग्नात् स्वजन्मराशेर्वाऽष्टमराशिः प्रवेशलग्नेन प्रेक्षित इत्यर्थः पुनः कीदृशे लग्ने व्यर्कारिरिक्तावरदर्शचैत्रे अकारौ प्रसिद्धौ वारौ।

रिक्ता ४।९।१४ उपलक्षणत्वाद्दग्धतिथयोपि चरलग्नानि मेषकर्कतुलामकराख्यानि तदंशाश्च दर्शो मावास्या चैत्रमासः विगली अर्कोदयोय।
स्मिन् अर्कोदयः प्रवेशदिने निषिद्धा इत्यर्थः अग्र इति गृहप्रवेशसमये जलपूर्णकलशं स्वसंमुखं कृत्वा द्विजान्ब्राह्मणांश्चाग्रे कृत्वा वेश्म गृहं विशे
त् वसिष्ठः कृत्वाथ ऋक्षे पृष्ठतो वामतोऽर्कं विप्रान्पूज्यानग्रतः पूर्णकुंभम् रम्यं हर्म्यं तोरणस्रग्वितानैः स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेदिति अयं विधिः
प्रवेशसाधारणः कीदृशं वेश्म भकूटशुद्धं भकूटं षष्ठाष्टकादि उपलक्षणत्वाद्विवाहप्रकरणोक्तम् वर्णो वश्यं तथा तारेत्यादिकं च तेनापि शुद्धम् वसि
ष्ठः राशिकूटादिकं सर्वं दंपत्योरिव चिंतयेदिति ४ अथ वामगतार्कज्ञानं पूर्वादिमुखगृहप्रवेशं चेन्द्रवंशयाह वामोरविरिति अष्टमपंचमद्विती
येकादशस्थानेभ्यः पंचसु स्थानेषु स्थिते रवौ सति प्राग्वदनादिके मंदिरे प्रवेष्टव्ये गृहप्रवेशे कर्तुर्वामो रविर्ज्ञेयः यथा तस्मिन्लग्ने गृहप्रवेशः कर्तु

शुद्धो ध्रुवे च विजनुर्भमृत्यो व्यर्कारिरिक्ताचरदर्शचैत्रे अग्रेंबुपूर्णकलशं द्विजांश्च कृत्वा विशेद्वेश्म भकूटशुद्धम् ४ वामो र।
विर्मृत्युसुतार्थलाभतोऽर्के पंचभे प्राग्वदनादिमंदिरे पूर्णातिथौ प्राग्वदने गृहे शुभो नंदादिके याम्यजलोत्तराननें ५॥

र्भविष्यते तस्मादष्टमं यत्स्थानं ततः पंचसु स्थानेष्वर्के सति पूर्वाभिमुखे गृहे प्रवेशकर्तुर्वामः सूर्यः स्यात् तथा लग्नाद्यत्पंचमस्थानं ततः पंचसु स्था
नेषु रवौ स्थिते दक्षिणाभिमुखे वामोर्कः तथैव लग्नाद्द्वितीयस्थानं ततः पंचसु स्थानेषु रवौ स्थिते पश्चिमाभिमुखे वामोऽर्कः तथैव लग्नादे
कादशस्थानं ततः पंचसु स्थानेषु सूर्ये स्थिते उत्तराभिमुखे गृहे प्रवेशकर्तुर्वामः सूर्य इत्यर्थः उक्तं च रंध्रात्सुताद्धनादायात्पंचस्वर्के स्थिते क्रमात्
पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः इति पूर्णातिथाविति प्राग्वदने पूर्वाभिमुखे गृहे पूर्णातिथौ पंचम्यां दशम्यां पूर्णिमायां वा प्रवेशः नंदादिके तिथि
गणे याम्यजलोत्तराननें गृहे प्रवेशः यथा दक्षिणाभिमुखे गृहे नंदायां प्रतिपदि षष्ठ्यामेकादश्यां वा प्रवेशः शुभः जलपश्चिमा दिक् तद्दिङ्मुखे गृहे।
भद्रायां द्वितीयायां सप्तम्यां द्वादश्यां वा प्रवेशः शुभः उत्तराभिमुखे गृहे जयायां तृतीया॥ छ॥ ६। छ॥ ॥

गुरुः नंदाभ्यां दक्षिणद्वारं भद्रायां पश्चिमामुखं जयायामुत्तरद्वारं पूर्णायां पूर्वतो विशेदिति ५ अथ प्रवेशकलशवास्तुचक्रं शार्दूलविक्रीडितेनाह वक्रे भूरिति गृहप्रवेशसमय इति सर्वत्रापि संबध्यते कुंभे कलशाकृतिवास्तोः रविभात् सूर्याक्रांतनक्षत्रात् तुल्यफलोपपंचमी रविभमारभ्य कलशस्य मुखे भूरेकं सूर्याक्रांतनक्षत्रमेव स्थाप्यं तत्फलं गृहस्याग्निदाहः ततः सूर्यभात् कृताः अग्रिमाणि चत्वारि भानि प्राच्यां स्थाप्यानि फलमुद्वसनं जलवासशून्यगृहस्यात् ततः कृताय मगताः तदग्रिमाणि चत्वारि भानि दक्षिणे स्थाप्यानि फलं गृहपतेर्लाभः द्रव्यप्राप्तिः ततः कृताः पश्चिमे तदग्रिमाणि चत्वारि भानि पश्चिमायां स्थाप्यानि फलं गृहपतेः श्रीप्राप्तिः ततो वेदा उत्तरे तदग्रिमाणि चत्वारि भानि उत्तरस्यां स्थाप्यानि फलं कलिः लोकैः सह गृहसंबंधी निरर्थको वादः झकटः कस्यात् ततो युगमितास्तदग्रिमाणि चत्वारि भानि गर्भे कलशमध्ये स्थाप्यानि फलं विनाशो गर्भस्यैव स्यादर्थः ततो रामास्तदग्रिमाणि त्रीणि भा

वक्रे भूरविभात्प्रवेशसमये कुंभेऽग्निदाहः कृताः प्राच्यामुद्वसनं कृताय मृगताल्लाभः कृताः पश्चिमे श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे रामास्स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ६ ॥ ॥ निगुदे गुदे स्थाप्यानि फलं स्थैर्यं गृहपते

र्बहुकालं तत्र निवासः ततोऽनलास्तदग्रिमाणि त्रीणि भानि कंठे स्थाप्यानि फलं स्थिरत्वं गृहपतेर्भवेत् एवमभिहितानि सप्तविंशति भानि न्युः ज्योतिः प्रकाशे भूर्वेदपंचकं त्रित्रिः १।४।४।४।४।५।३।३ प्रवेशे कलशेऽर्कभात् मृतिर्गतिर्धनं श्रीः स्याद्वैरं शुक् स्थिरता सुखमिति अत्र कलशचक्रे शुभफलस्थानपतितस्यैव हि हिनक्षत्राणां परिग्रहो युक्तस्तत्रापि यद्दिङ्मुखप्रवेशविधित्सितेन दिङ्मुखं नक्षत्रपरिग्रहः यथा पूर्वस्यां प्रवेशे विधित्सिते रोहिण्यो मृगो वा ग्राह्यः दक्षिणमुखगृहप्रवेशे उत्तराफाल्गुनी चित्रैव पश्चिमाभिमुखे अनुराधोत्तराषाढ एव उत्तराभिमुखे उत्तराभाद्रपदा रेवत्यो ग्राह्या इति निष्कृष्टोर्थः अत एवोक्तं वसिष्ठेन यद्दिग्द्वारं मंदिरं तद्दिगृक्षैरुक्तैर्ऋक्षैः स्यात्तन्निवेशनं सर्वैरिति तद्दिगृक्षैरिति ब्रालयोः समानाधिकरण्येनान्वयः भिन्नवाक्यत्वे तु चकारः कर्तव्यः स्यात् अत एव अर्कानिलायां इति दक्षविघ्नमुक्षसे प्रविष्ठनवमंदिरं यत् अब्दत्रयान्तसरहस्तपा

अथगृहप्रकरणप्रवेशोपसंहारंस्ववयनप्रवेशोत्तरकालीनकर्त्तव्यविधिमुपजात्याह एवंस्फलग्नेइति एवंप्रागुक्तप्रकारेणविचारितस्फलग्नेशोभनगु
णयुतेस्थिरराश्यादिकेराजावितानपुष्पश्रुतिघोषयुक्तवितानानिवस्त्रमंडपाःपुष्पाणिस्वकालर्तुजानिमालत्यादीनिश्रुतिघोषोवेदध्वनिश्चैतैर्युक्तंउपलक्ष
णत्वात्तोरणाद्यनेकमांगल्यवस्तुसहितमेतादृशंस्वसत्ताकंगृहंप्रविश्यपश्चात्शिल्पज्ञान्गृहोत्थापकान्स्थपतिवर्द्धक्यादीन्दैवज्ञान्ज्योतिर्विदःवि
धिज्ञान्वास्तुपूजाभूतबलिगृहप्रवेशविधिज्ञान्पुरोहितप्रभृतीन्पौरान्नागरिकान्पण्डितादीनानार्थाधरूपणांश्च भूमिहिरण्यवस्त्रैर्यथाशक्त्या
न्यैस्तैःसमस्तैर्वाउपलक्षणत्वादश्वादिभिर्वाअर्चयेत्पूजयेत् अत्रविशेषमाह वसिष्ठःयद्वास्तुपूजारहितंत्वदत्तबलित्वनाच्छन्नगृहंविरूपंकपाट
हीनंनविशेद्यतस्तत्सर्वोऽपदामलियमेवतत्स्यादितितस्मात्संकर्षादमुपरिष्टाच्छादितंकृतवास्तुपूजादत्तबलिमेवगृहंप्रविशेत् प्रवेशान्तरमाह।

एवंस्फलग्नेस्वगृहंप्रविश्यवितानपुष्पश्रुतिघोषयुक्तम् शिल्पज्ञदैवज्ञविधिज्ञपौरान्राजार्चयेद्भूमिहिरण्यवस्त्रैः ७ ॥ इ॥
तिदैवज्ञरामविरचितेमुहूर्त्तचिंतामणौगृहप्रवेशप्रकरणंत्रयोदशम् १३ ॥ आसीद्धर्मपुरेषडंगनिगमाध्येतृद्विजैर्मंडिते
ज्योतिर्वित्तिलकःफणींद्ररचितेभाष्येकृतातिश्रमः॥ ॥ श्रीपतिःततोनृपोविप्रस्फलत्पुरोधसः।शिल्पज्ञभूगोलविदश्चलिंगिनःध
नेश्वरस्तैःपञ्चभिःसमर्चयन्सदाधरानाम्पुरवासिनस्तथेति ७ इतिगृहप्रवेशप्रकरणम् अथग्रंथसमाप्तौपितामहवर्णनंशार्दूलविक्रीडितेन
ह आसीदिति धर्मपुरेनर्मदातीरग्रामविशेषेसत्प्रसिद्धश्चिंतामणिरासीत् किंभूतेधर्मपुरेषडंगानिशीक्षादीनितानिविद्यंतेयस्यएतादृशायेनिगमविद्
स्तरद्ध्येतारोयेद्विजाब्राह्मणादयस्तैर्मंडितेभूषिते कीदृशश्चिंतामणिर्ज्योतिर्वित्तिलकइवतिलकःज्योतिर्विच्छ्रेष्ठइत्यर्थः पुनःकीदृशःफणींद्रःशेषस्त
द्रचितेभाष्येमहाभाष्येकृतातिश्रमोऽभ्यासोयेन पुनःकीदृशश्चिंतामणिःतत्तज्जातकसंहितागणितकृत् तानितानिस्वल्पबृहदादिभेदेनानेक
विधःजातकानिजातकशास्त्राणिसंहिताःसंहिताशास्त्राणिकरोतितादृशः गणितानिगणितशास्त्राणिकरोतितादृशः पुनःकीदृशःमहाभूभुजानांमान्यः

कनिवेदवाक्यविलसद्बुद्धिः तर्को न्यायशास्त्रं अलंकृति अलंकारशास्त्रम् वेदवाक्यं वेदवाक्यविचारप्रतिपादको ग्रंथो मीमांसशास्त्रं वेदांतशा
स्त्रं च तेषु विलसती विलासयुक्ता बुद्धिर्यस्य सः ८ अथ क्रमप्राप्ततातवर्णनं तेनैव वृत्तेनाह ज्योतिर्विदिति तत्तनुस्तस्य चिंतामणिदैवज्ञस्य तनुः पु
त्रोनंत इति नाम्ना प्रथां ख्यातिमधिगतः प्राप्त आसीत् कीदृशः ज्योतिर्विद्गणवंदितांघ्रिकमलः ज्योतिर्विदां गणेन समूहेन वंदितं चरणकमलं य
स्य सः पुनः कीदृशः भूमंडले हस्कर इव अध्ययनद्वारा प्रकाशद इत्यर्थः पुनः कीदृशः कृती कुशलः ग्रंथकरणसमर्थ इति शेषः ग्रंथकर्तृत्वमेवोत्त
ईनप्रकाशयति यो रम्यामिति रम्यां जनिपद्धतिं जातकपद्धतिं दुष्टाशयध्वंसिनीं दुष्टाः जन्मपद्धतिमार्गे संप्रदायानभिज्ञास्तेषामाशयमभिप्रायं ध्वंस

तत्तज्ज्ञातकसंहितागणितकृन्मान्यो महाभूभुजां तर्कालंकृतवेदवाक्यविलसद्बुद्धिः स चिंतामणिः ८ ज्योतिर्विद्गणवं
दितांघ्रिकमलस्तत्सूनुरासीत्कृती नाम्नानंत इति प्रथामधिगतो भूमंडलाहस्करः यो रम्यां जनिपद्धतिं समकरोद्दुष्टाशया
ध्वंसिनीं टीकां चोत्तमकामधेनुगणिते कार्षीत्सतां प्रीतये ९ तदात्मज उदारधीर्विबुधनीलकंठानुजो गणेशपदपंकजं हृदि नि
धाय रामाभिधः गिरीशनगरे वरे भुजभुजेषुचंद्रे १५२२ मिते शके विनिरमादिमं खलु मुहूर्तचिंतामणिम् १० ॥ इति श्रीदैवज्ञरा
मविरचितं मुहूर्तचिंतामणि समाप्तम् ॥

ध्वंसिनी तामकरोत् तथा उत्तमे ब्रह्मपक्षार्यपक्षप्रतिपादके कामधेनुगणि
ते ग्रंथविशेषे टीकां च सतां प्रीतये कार्षीत् कृतवानित्यर्थः ९ अथ स्वनामकथनपूर्वकं ग्रंथसमाप्तिं पृथ्वीछंदसाह तदात्मज इति तस्यानंतस्यात्मजो
रामाभिधो गिरीशनगरे वाराणस्यां मुहूर्तचिंतामणिं मुहूर्तचिंतामणिनामधेयं ग्रंथं भुजभुजेषुचंद्रे १५२२ मिते शके द्वाविंशत्यधिकपंचदशशत
मिते शाके विनिरमात् कार्षीत् शेषं स्फुटम् १० ॥ इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां
गृहप्रवेशप्रकरणं त्रयोदशं संपूर्णम् समाप्तम् ॥ लिखितं महादेवदीक्षिततिलकेन ॥ सम्वत् १९३० मि॰ कुवार वदि २ वार सोमवार

॥इतिमुहूर्त्तचिन्तामणिप्रमिताक्षराटीकासमाप्ता:॥ सम्वत् १९३० ॥ छ॥